## ॥ ॐ एं एकात्मने नम ॐ ॥

एं एकारस्य ईशाय । एकात्मने एको मुख्यः अन्यः क्षराक्षराभ्यां वा अद्वितीयो वा आत्मा स्वरूपं यस्य । ''मत्त : परतरं नान्यत्''इति गीतासु । ''क्षरःसर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः''इति च । ''नेह नानाऽस्ति किञ्चन''इति श्रुतिश्च । 'एके मुख्यान्यकेवला'इत्यभिधानम् । तस्मै ॥११॥

## ॥ ॐ ऐं ऐराय नम ॐ ॥

ऐं ऐकारस्य ईशाय । ऐराय आ सर्वसृष्टौ आशब्दवाच्यं ब्रह्माणं ईरयति प्रेरयति इति । तस्मै । ''सर्ग उद्यममावह''इति भगवदुक्तेः भागवते । 'ईर प्रेरणे' । यद्वा इरा अन्नं, इराशब्दस्य अन्ननामसु पाठात्, तदीश्वरः ।

अथवा इरा सरस्वती इरो वायुर्वा तयोरन्तर्गत ऐरस्तस्मै ॥१२॥

## ॥ ॐ ओजोभृते नम ॐ ॥

ओं ओकारस्य ईशाय । ओजोभृते ओजः सामर्थ्यं बिभर्तीति तस्मै ॥१३॥

## ॥ ॐ औं औरसाय नम ॐ ॥

औं औकारस्य ईशाय । औरसाय सर्वजीवानां उरसि हृदि वसति औरसः । तस्मै ।

अथवा उरसि भवो धर्मः औरसः सोऽस्य पाल्यत्वेन अस्तीति । ''स त्वं हि मे हृदयं यत्र धर्मः'' इति ऋषभोक्तेर्भागवते । अर्श आद्यच् । ''धर्मस्य गुप्त्यै खलनिग्रहाय'' इति च । तस्मै ॥१४॥

## ॥ ॐ अं अन्ताय नम ॐ ॥

अं अंशब्दस्य ईशाय । अन्ताय अन्तयति अन्तं करोति दुष्टानामिति अन्तः तस्मै ॥१५॥

## ॥ ॐ अः अर्धगर्भाय नम ॐ ॥

अः अःशब्दस्य ईशाय । अर्धगर्भाय ऋध्यति इत्यर्थः । अपरिछिन्नो गर्भो यस्य तस्मै । अनन्तोदरगकाशाय इत्यर्थः ॥१६॥

## ॥ ॐ कं कपिलाय नम ॐ ॥

कं ककारस्य ईशाय । कपिलाय कः सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः । ''प्रीतिस्सुखं क्मानन्दः''इत्यभिधानम् । ''प्राणो ब्रह्म कं ब्रह्म''इति च । ''सुखादनन्तात्पालनाल्लीयनाच्च यं देवं कपिलमुदाहरन्ति''इति भाभ्रव्य-शाखायाम् ।

यद्वा 'कवृ वर्णे' 'कवेः पश्च'इति इलच् प्रत्ययः, पकारश्चान्तादेशः । कपिलोऽस्याऽस्तीति वा । 'अर्श आद्यच्' ।

**'वर्णे ना कुक्कुरे मुनौ । अनले वासुदेवे च कपिलः परिकीर्तितः'इत्युक्तेः ।**

अथवा कपीन् वानरान् लाति सैनिकत्वेन स्वीकरोतीति रामचन्द्ररूप इत्यर्थः ॥१७॥

## ॥ ॐ खं खपतये नम ॐ ॥

खं खकारस्य ईशाय । खपतये खस्य आकाशस्य पत्ये नियन्त्रे । ''नभो ददाति श्वसतां मार्गं यन्नियमाददः'' इति भागवते ॥१८॥

## ॥ ॐ गं गरुडासनाय नम ॐ ॥

गं गकारस्य ईशाय । गरुडासनाय गरुडः आसनं वाहनं यस्य तस्मै ॥१९॥

## ॥ ॐ घं घर्माय नम ॐ ॥

घं घकारस्य ईशाय । घर्माय 'घृ क्षरणदीप्त्योः'इति धातोः तेजोरूपाय अन्तर्णीतण्यर्थात्प्रकाशकाय वा ॥२०॥

## ॥ ॐ ङं ङसाराय नम ॐ ॥

ङं ङकारस्य ईशाय। ङसाराय ङस् इति षष्ठ्येकवचनं आरे समीपे यस्येति। ङसोसामिति षष्ठीविधानात्। 'आराद्दूरसमीपयोः'इत्यभिधानम्। स्वरूपाभेद-प्रदर्शनार्थं एकवचनम्। षष्ठ्यर्थस्य 'अस्य गौः' इत्यादौ दृष्टस्य वशे स्थापनरूपगुणस्य अधिकरणरूपाय इत्यर्थः। ''यद्वशे इदम्''इति भागवते। ''वशी वशे न कस्यापि''इति च।

[१] यद्वा ङेन शब्देन समाना (समानार्थका) आ सर्वतो रतिः यस्य इति। 'ङुङ् शब्दे'।

ङस्य भैरवस्यापि सारः बलं वित्तं वा यस्मात्। 'ङकारो भैरवः प्रोक्तः' इत्यभिधानम्। ''सारः श्रेष्ठे बले वित्ते''इति च। सर्वसारत्वात्सर्ववर्णवाच्यत्वाच्च ङस्यापि सार इति वा ॥२१॥

## ॥ ॐ चं चार्वङ्गाय नम ॐ ॥

चं चकारस्य ईशाय। चार्वङ्गाय चारूणि कंदर्पकोटितोऽधिकलावण्योपेतानि अङ्गानि अवयवा यस्य तस्मै। 'अङ्गं प्रतीकोऽवयवः'इत्यभिधानम् ॥२२॥

## ॥ ॐ छं छन्दोगम्याय नम ॐ ॥

छं छकारस्य ईशाय। छन्दोगम्याय छन्दोभिः वेदैः गम्याय ज्ञेयाय। ''वेदा ह्येवैनं वेदयन्ति''इति श्रुतेः।

यद्वा छन्दसां वेदानामपि साकल्येन अगम्याय।'' न वेदयज्ञाध्ययनैर्न दानैः''इत्यादि गीतासु ॥२३॥

## ॥ ॐ जं जनार्दनाय नम ॐ ॥

---

१. ङः इत्यस्य शब्दः इत्यर्थः। शब्दः ''यावद् ब्रह्म विष्ठितं तावती वाक्'' इति वेदवचनानुसारेण सर्वदेशव्यापी। तेन शब्देन सर्वदेशव्यापिना समाना परमेश्वरस्य रतिः इति भावः।

जं जकारस्य ईशाय । जनान् असज्जनान् अर्दयति हिनस्ति तस्मै । ''अर्द हिंसायां'' । ''शृण्वे वीर उग्रमुग्रं दमायन्''इति श्रुतेः ।

जनैः सद्भिः अर्द्यते याञ्च्यतेऽसाविति तस्मै । 'अर्द गतौ याचने च' इति धातोः ॥२४॥

॥ ॐ झं झाटितारये नम ॐ ॥

झं झकारस्य ईशाय । झाटितारये झाटिता विद्राविता अरयो येनेति तस्मै ॥

॥ ॐ ञं ञमाय नम ॐ ॥

ञं ञकारस्य ईशाय । ञमाय यमयति नियमयति विश्वमिति तस्मै । ''यमो नियमनाद्धरिः''इति ब्रह्माण्डे । पृषोदरादित्वात् यस्य ञः ॥२६॥

॥ ॐ टं टङ्किने नम ॐ ॥

टं टकारस्य ईशाय । टङ्किने टङ्कः पाषाणदारणं आयुधं तद्वान् टङ्की तस्मै ॥

॥ ॐ ठं ठकलाय नम ॐ ॥

ठं ठकारस्य ईशाय । ठक्लाय कलाभिः षोडशकलात्मकशरीरेण ठः शून्यः तस्मै । 'ठश्शून्ये च बृहद्ध्वनौ' इति कोशात् ।

ठं बृहद्ध्वनिं कलयति स तथेति वा तस्मै । ''विमुञ्चतो यस्य महाट्टहासं''इत्यादि भागवते ।

कोशे 'ठश्शून्ये च बृहद्भानौ' इति पाठे ठान् बृहद्भानून् महाकिरणान् कलयति इति । ''तत्तेजसा खं ककुभो न रेजिरे''इत्युक्तेः ॥२८॥

॥ ॐ डं डरकाय नम ॐ ॥

डं डकारस्य ईशाय । डरकाय डयते आकाशे गच्छति रमते क्रीडते कः सुखरूपश्च इति डश्चासौ रश्चासौ कश्चेति डरकः । 'डीङ् विहायसगतौ' । 'रमु क्रीडायां' । ''अन्येभ्योऽपि''इति डः ॥२९॥

## ॥ ॐ ढं ढरिणे नम ॐ ॥

ढं ढकारस्य ईशाय । ढरिणे ढरयति क्षरयति प्रलये सर्वमिति तस्मै । 'द्रू क्षरणे' ॥३०॥

## ॥ ॐ णं णात्मने नम ॐ ॥

णं णकारस्य ईशाय । णात्मने णः आनन्दः तदात्मा तत्स्वरूपः इत्यर्थः । 'णश्च निर्वृतिवाचकः' इत्यभिधानम् । ''आनन्दमात्रम्''इति श्रुतेः ॥३१॥

## ॥ ॐ तं ताराय नम ॐ ॥

तं तकारस्य ईशाय । ताराय तारयति भक्तान् संसारात् इति तारः तस्मै । तथा च अथर्वणशिरसि श्रुतिः ''अथ कस्मात् उच्यते तारं यस्मात् उच्चार्यमाणः एव गर्भजन्ममरणसंसाराख्यात् भक्तान् तारयति''इत्यादि । तारः प्रणवः वाचकत्वेन अस्य अस्तीति वा । ''अर्श आद्यच्'' । ''वाचकः प्रणवो मम'' इति भगवदुक्तेः ॥३२॥

## ॥ ॐ थं थभाय नम ॐ ॥

थं थकारस्य ईशाय । थभाय थवत् पर्वत इव भाति इति थभः तस्मै । 'शिलोच्चये थकारस्स्यात्' इत्येकाक्षरः (१०-२४-३५) ।

> **''कृष्णस्त्वन्यतमं रूपं गोपं विश्रमणं गतः ।**
> **शैलोऽस्मीति ब्रुवन्भूरि बलिमादद्बृहद्वपुः''**॥ इति भागवते ।

स्थिरकान्तये वा ॥ ३३॥

## ॥ ॐ दं दण्डिने नम ॐ ॥

दं दकारस्य ईशाय । दण्डिने दण्डयति असतः इति दण्डी तस्मै । ''खलदण्डधरोऽङ्घ्रिपातैः'' इति भागवते ।

गोचारणकाले यष्टिमते वा । वामनरूपाय वा । ''अजिनदण्डकमण्डलु-मेखलारुचिरपावनवामनमूर्तये''इत्युक्तेः ॥३४॥

**॥ ॐ धं धन्विने नम ॐ ॥**

धं धकारस्य ईशाय । धन्विने प्रशस्तं शार्ङ्गाख्यं धनुः अस्यास्तीति तस्मै ॥

**॥ ॐ नं नम्याय नम ॐ ॥**

नं नकारस्य ईशाय । नम्याय ब्रह्मादिवन्द्यायेत्यर्थः ॥३६॥

**॥ ॐ पं पराय नम ॐ ॥**

पं पकारस्य ईशाय । पराय पालकाय पूर्णाय वा । 'पृ पालनपूरणयोः' इति धातोः । क्षराक्षरोत्तमाय वा । 'दूरानात्मोत्तमाः पराः' इत्यभिधानम् ॥३७॥

**॥ ॐ फं फलिने नम ॐ ॥**

फं फकारस्य ईशाय । फलिने फलं सर्वसत्कर्मफलं अस्यास्तीति । ''स्वामी हि फलमश्नुते''इति श्रुतेः । सर्वस्वामित्वेऽपि सत्फलस्यैव भोक्त्रे इत्यर्थः । ''शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्'' इत्युक्तेः ॥३८॥

**॥ ॐ बं बलिने नम ॐ ॥**

बं बकारस्य ईशाय । बलिने बलं स्थौल्यं सामर्थ्यं सैन्यं वा अस्तीति तस्मै । 'स्थौल्यसामर्थ्यसैन्येषु बलम्' इत्यमरः ॥३९॥

**॥ ॐ भं भगाय नम ॐ ॥**

भं भकारस्य ईशाय । भगाय ऐश्वर्यादिरूपायेत्यर्थः ।

''ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा'' ॥ इत्युक्तेः वैष्णवे ॥४०॥

**॥ ॐ मं मनवे नम ॐ ॥**

मं मकारस्य ईशाय । मनवे मन्यत इति मनुः तस्मै ज्ञानरूपाय इत्यर्थः । 'मनु अवबोधने' इति धातोः । तापसमन्ववताराय वा । मेन ब्रह्मणा शिवेन वा नूयते स्तूयते स तथेति वा । 'णु स्तुतौ' ॥४१॥

## ॥ ॐ यं यज्ञाय नम ॐ ॥

यं यकारस्य ईशाय । यज्ञाय इज्यते ब्रह्मादिभिः इति स तथा तस्मै । 'यज देवपूजादौ' ''यज याच''इति नङ् । ''य इज्यते विधीशानशक्रपूर्वैस्सदा मखैः'' इति कर्मनिर्णये ॥४२॥

## ॥ ॐ रं रामाय नम ॐ ॥

रं रेफस्य ईशाय । रामाय आनन्दरूपत्वात् पूर्णरूपत्वात् लोकरमणत्वाच्च रामः तस्मै । तथाहि रश्चासौ अमश्चेति विग्रहः । रः आनन्दरूपः अमः नास्ति मा परिमाणं यस्य इति । यद्वा रमयति लोकमिति । ''आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद्रमते तेन रामः'' इति शाण्डिल्यशाखायाम् ॥४३॥

## ॥ ॐ लं लक्ष्मीपतये नम ॐ ॥

लं लकारस्य ईशाय । लक्ष्मीपतये लक्ष्म्याः पतिः भर्ता तस्मै ॥४४॥

## ॥ ॐ वं वराय नम ॐ ॥

वं वकारस्य ईशाय । वराय व्रियते सर्वैरिति वरः तस्मै । 'वृञ् वरणे' ॥४५॥

## ॥ ॐ शं शान्तसंविदे नम ॐ ॥

शं शकारस्य ईशाय । शान्तसंविदे ''शमो मन्निष्ठता बुद्धेः'' इत्युक्तेः शान्ता भगवन्निष्ठबुद्धयः, तेषां संवित् निर्दोषज्ञानं यस्मात् स तथा तस्मै ॥४६॥

## ॥ ॐ षं षड्गुणाय नम ॐ ॥

षं षकारस्य ईशाय । षड्गुणाय षट् ज्ञानैश्वर्यप्रभानन्दतेजश्शक्तिरूपाः गुणाः यस्येति । तद्गुणरूपाय वा ॥४७॥

## ॥ ॐ सं सारात्मने नम ॐ ॥

सं सकारस्य ईशाय । सारात्मने सारं आप्नोति प्राप्नोति आदत्ते गृह्णाति वा अत्ति भुनक्तीति वा सारात्मा ।

**''यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।**
**यच्चास्य सन्ततो भावस्तेनात्मेति च भण्यते''**॥ इति भारतोक्तेः ।

उत्कृष्टस्वरूपो वा तस्मै ॥४८॥

## ॥ ॐ हं हंसाय नम ॐ ॥

हं हकारस्य ईशाय । हंसाय हन्ति जानाति वा सर्वमिति हंसः तस्मै । 'हन हिंसागत्योः' इति धातोः । गत्यर्थस्य च ज्ञानार्थत्वात् । ''वृतृवदिहनिकमिकषिभ्यः सः'' इति सः । यद्वा 'अचि भवेद्वर्णागमाद्धंस' इति सक् ।

अथवा हन्ति त्यजति पूर्वशरीरं सनति नवं शरीरं इति हंसो जीवः सः कार्यत्वेन अस्य अस्तीति हंसः । ''अर्श आद्यच्'' । उक्तं च भारते

**''त्यागात्पूर्वशरीराणां नवानां सञ्चयेन च ।**
**जीवं हंसमिति प्राहुः तद्धेतुत्वाद्धरिं परम्''**॥ इति ।

**'षण सम्भक्तौ'** । धातुलोपो निरुक्तत्वात् ॥४९॥

## ॥ ॐ ळं ळाळुकाय नम ॐ ॥

**ळं ळकारस्य ईशाय ।** ळाळुकाय 'लल विलासे' इति धातोः विलासवान् इत्यर्थः तस्मै ॥५०॥

## ॥ ॐ क्षं (लक्ष्मी)नृसिंहाय नम ॐ ॥

क्षं ककारषकाररूपवर्णद्वयात्मकस्य क्षकारस्य ईशाय । पुरुषमृगेन्द्ररूपद्व्याकारत्वात् नृसिंहाय । नॄन् जीवान् सिनोति बन्धयतीति नृसिः बन्धः, तं हन्ति नाशयतीति नृसिंहः तस्मै । 'सिनु बन्धने' ।

**''नृशब्दो जीववाची स्यात्सिंशब्दो** बन्धवाचकः ।
**तस्य हन्ता नृसिंहो**ऽयं जीवबन्धविनाशकः''॥ इति **पञ्चरात्रागमोक्तेः ।**

अत्र **उक्तसर्व**शब्दानां साधुत्वं पृषोदरादित्वात् उणादिप्रत्ययैः समर्थनीयम् । विस्तरभयान्नेह प्रपञ्चितम् ।

॥ इत्येकपञ्चाशन्मन्त्रात्मको मात्रकामन्त्रोऽयं षष्ठो मन्त्रः ॥६॥

## ७. पुरुषसूक्तमहामन्त्रः

सप्तत्रिंशोत्तरत्रिशताक्षरमात्रकामन्त्रान्ते एकादशोत्तरपञ्चशतवर्णात्मकत्वेन वर्णाधिक्याद्गायत्रीमन्त्राभिव्यक्तत्वाच्च सप्तममन्त्रत्वेन अयं पुरुषसूक्तरूपो मालामन्त्रः ॥ **सहस्रशीर्षेति** ॥

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।**
**स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥१॥**

अत्र सहस्रशब्दोऽनन्तपर्यायः । ''परमो हरिरादिरनादिरतोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणः'' इति श्रुतिसमाख्यानात् । सहस्राणि अनन्तानि शीर्षाणि यस्येति । सहस्राणि अक्षीणि यस्य इति । सहस्राणि पादा यस्येति पादशब्दस्य ''सङ्ख्यासुपूर्वस्य'' इत्यलोपः । एवंविधः पुरुषः पूर्षु सर्वहृदयेषु शेतेऽसौ तथा ।

**''भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।**
**स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः''॥ इत्युक्तेः ।**

पुरुषनामा यो नारायणः 'आसीत्'इति शेषः । स नारायणः । भूमिं प्रकृतिम् । भवत्यत्र जगदिति भवतेरौणादिकमिक्प्रत्ययान्ततया यौगिकत्वेन तद्वाचकत्वात् । विश्वतः सर्वतः । वृत्वा व्याप्य । दशाङ्गुलं दश अङ्गुलयः परिमाणं अस्येति दशाङ्गुलम् । ''तत्पुरुषस्य अङ्गुलेः सङ्ख्याव्ययादेः'' इत्यङ्गुलिशब्दात् अच् प्रत्ययः । ''दशेति सर्वम्''इति ऐतरेयश्रुतौ सर्वसङ्ख्यानां दशसङ्ख्यान्तर्भावस्योक्तेः । अपरिमिताङ्गुलमित्यर्थः । अत्यतिष्ठत् अतिक्रम्य वर्तते । उक्तं च मात्स्ये ''भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः'' इति ।

यद्वा सः भूमिं भूम्युपलक्षितब्रह्माण्डं विश्वतो वृत्त्वा दशाङ्गुलं वितस्तिमात्रपरिमितं प्राणिनां हृदयं अत्यतिष्ठत् अध्यतिष्ठत् । सर्वव्याप्तिं अविहायैव हृदयदेशं आस्थितवानित्यर्थः । उक्तं च गारुडे ''वितस्तिमात्रहृदयमास्थाय व्याप्नुते जगत्'' इति ॥१॥

अत्र षोडशमन्त्राणामपि पृथक् भगवद्गुणप्रतिपादकत्वान्न मिथः सङ्गत्यपेक्षा । ॥ **पुरुष एवेति** ॥

**ॐ पुरु॑ष ए॒वेदं सर्वं॒ यद्भू॒तं यच्च॒ भव्य॑म् ।**
**उ॒ताम॑तत्व॒स्येशा॑नो॒ यदन्ने॑नाति॒रोह॑ति ॥२॥**

इदं प्रमाणप्रमितं वर्तमानम् । यद्भूतं अतीतम् । यच्च भव्यं आगामि । तत्सर्वं पुरुष एव । 'राजा राष्ट्रम्' इतिवत्पुरुषाधीनमेव । ''यदधीना यस्य सत्ता तत्तदित्येव भण्यते'' इति स्मृतेः । ''पुरुष एवेदं सर्वमिति पुरुषेणैवेदं सर्वं व्याप्तं आतृणात् आकरीषात् तत्सर्वं भगवानिति मिथ्यादृष्टिरेव'' इति शाखान्तरब्राह्मणे चास्य वाक्यस्य प्रतीकपूर्वकं सर्वव्यापितार्थकत्वेन व्याख्यानाच्च । व्यापित्वस्य तन्नियमनार्थत्वेन सर्वस्य तदधीनत्वलाभात् । तथा चोक्तं भारते -

''पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीशत्वात् न तु सर्वस्वरूपतः''॥ इति ।

उतशब्दोऽप्यर्थे । अमृतत्वस्य उत भावभवित्रोरभेदात् मुक्तवर्गस्यापि ईशानः स्वामी । कुतः सर्वेशत्वं तस्य अत्राह ॥ **यदिति** ॥ यत् यस्मात् । अन्नेनेति तृतीया द्वितीयार्थे । अन्नं अदनीयं मरणशीलं संसारिजीवजातम् । अतिरोहति अतिक्रामति वशीकरोतीति यावत् । संसारे स्वाधीनं जगत् यदि मुक्तौ स्वाधीनतां जह्यात् तदा प्रेक्षावान् तन्न मोचयेत् । अतो मुक्तावपि तदधीनमेवेति भावः । ''सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्'' इति भागवते ॥२॥

॥ एतावानिति ॥

ॐ एतावाँनस्य महिमाऽतो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥

अस्य पुरुषस्य । महिमा सहस्रशीर्षत्वविश्वव्यापित्वमुक्तादिसर्वनियन्तृत्वादिरूपः प्रागुक्तो महिमा । एतावानिति काकुस्वरः । न एतावानेव इत्यर्थः । किंत्वित्यत आह ॥ अत इति ॥ अतः प्रागुक्तमहिम्नोऽपि ज्यायान् श्रेष्ठः । कथमित्यतो व्यनक्ति ॥ पाद इति ॥ अस्य पुरुषस्य विश्वा विश्वानि सर्वाणि "सुपां सुलुक्" "पूर्वसवर्ण"इत्यादि सूत्रेण प्रथमाविभक्तेराकारादेशः । "छन्दसि"इति लोपो वा । भूतानि चेतनाचेतनवस्तूनि । एकः पादः एकः अंशः। एतच्चतुर्गुणपरिमितज्ञानानन्दादिमान् हरिरिति यावत् । एतच्च हरेः अपरिमितमहिमत्वेऽपि लोकबुद्ध्यारोहार्थं उक्तमिति ध्येयम् । "ज्ञापनार्थाय लोकस्य यथा राजेव देवराट्" इति स्मृतेः । अस्य पुरुषस्य त्रिपात् त्रयश्च ते पादाश्च "सङ्ख्यासुपूर्वस्य"इत्यन्तलोपः । त्रिपात् पादत्रयम् । एकवचनं छान्दसम् । अमृतं देहतोऽपि नाशरहितम् । अन्यत्पादत्रयं नारायणवासुदेववैकुण्ठाख्यरूपत्रयम् । दिवि चित्प्रकृत्यात्मकत्वेन द्योतमानेषु । एकवचनं बहुवचनार्थे । श्वेतद्वीपानन्तासनवैकुण्ठाख्यलोकेषु तिष्ठतीत्यर्थः ।

"भिन्नपादाः सर्वजीवाः तस्य सादृश्यमात्रतः ।
स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ।
नारायणो वासुदेवो वैकुण्ठ इति कीर्तिताः"॥

इति छान्दोग्यभाष्योक्तेः ॥३॥

॥ त्रिपादिति ॥

ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाऽभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनाऽनशने अभि ॥४॥

त्रिपात् प्रागुक्तरूपपादत्रयवान्पुरुषः । 'द्युभ्यः' इति शेषः । त्रिलोकेभ्य इत्यर्थः । ऊर्ध्वः बहिष्ठः । न केवलं दिव्येव त्रिपात् किन्तु त्रिलोकेभ्योऽपि बहिष्ठ इत्यर्थः । उदैत् श्वेतद्वीपादिलोकत्रयेषु नित्योदितो वर्तत इत्यर्थः । सार्वकालिकोऽयं लट् । तदुक्तं -

**''अनन्तासनवैकुण्ठनारायणपुराणि तु ।**
**त्रीणि धामानि वै विष्णोस्त्रिलोकाद्बहिरेव तु''।।** इति द्वितीयस्कन्धतात्पर्ये ।

दार्ढ्यार्थमेव इयं द्विरुक्तिः । एतत् श्वेतद्वीपादौ नित्याभिव्यक्ततयाऽवस्थानं देवानां सेवनार्थं तत्प्राप्तय इति च ज्ञेयम् । ''नारायणपरा देवास्त्रीनेतान्प्राप्नुवन्ति च'' इति तात्पर्योक्तेः ।। **अस्य पुरुषस्य** ।। पादः स्वरूपभूतं पुनः अपरं रूपम् । इह प्रागुक्तभिन्नपादरूपेषु भूतेषु । तन्नियामकत्वेन अभवद्वर्तत इत्यर्थः । किञ्च ततो हेतोः । विश्वक् विविधस्थानेषु श्वेतद्वीपादिषु सुष्ठु अञ्चति व्यक्ततया तिष्ठतीति विष्वक्शब्दवाच्यः । त्रिपात् पुरुषः । साशनं चानशनं च साशनानशने । प्रत्येकं एकवचनं समुदायाभिप्रायम् । अनशना देवाः साशनास्तदितरे विद्वज्जना ऋष्यादयः । तदुभयं अभि अभिव्याप्य तन्नियन्तृतयेति यावत् । व्यक्रामत् विशेषेणाक्रम्य स्थितवानित्यर्थः । तदुक्तं द्वितीयतात्पर्ये -

**''त्रिपात्स एव भगवान्सर्वप्राणिषु संस्थितः ।**
**निरन्नेषु च तद्वत्सु त्रिदशेष्वितरेषु च''।।** इति ।।४।।

।। तस्मादिति ।।

तस्मा॑द्विरा॒ळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।
स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ।।५।।

तस्मात् प्रागुक्तमहिमवतः पुरुषात् । स्वर्णमयतया विशेषेण राजत इति विराट्शब्दितं ब्रह्माण्डमजायत । तथा विराजः अण्डात् अधि अण्डमभिव्याप्य । विराण्णामा पुरुषः चतुर्मुखः । अजायत जातः । तथा विराण्णामा ब्रह्मा ।

तस्मात् पुरुषात् हरेः । तन्नाभिपद्मादित्यर्थः । अजायत रूपान्तरेण भौतिकदेहेन्द्रियादियुक्तस्सन् अभूदित्यर्थः । तस्मात्कारणात् विराजश्चतुर्मुखात् । पुरुषः पूर्वप्रकृतपुरुषशब्दितो हरिः । अधि अधिकः । 'अजायत' इत्यावृत्त्या योज्यम् । स जातश्चतुर्मुखः । पश्चाज्जातामिति योज्यम् । भूमिं भूम्युपलक्षितसर्वलोकस्थं शङ्करपूर्वकाशेषजीवजातम् । अथो पुरः पूर्वजातं ब्रह्माण्डं अभिमानिनो देवांश्च । अत्यरिच्यत अतिरिच्य वर्तते तेषामधिपतिरभूदित्यर्थः । तदुक्तं तात्पर्ये -

**''तस्माद्धरेरण्डमभूत् अण्डादपि चतुर्मुखः ।**
**स विराण्णामकस्तस्मात् अधिको हरिरेव तु ॥**

**अण्डाज्जातस्यान्यरूपं नाभिपद्मादभूद्धरेः ।**
**यदोभयात्मको जज्ञे ब्रह्मा लोकपितामहः ॥**
**तदैव सोऽतिरिक्तोऽभूत् शर्वपूर्वाविराजनान्''॥ इति ॥५॥**

**इति पुरुषसूक्ते हरिप्रशंसासाधनर्ग्वेदाभिव्यक्तिस्थानरूपो गायत्र्याद्यपादाभिव्यक्तः प्रथमो वर्गः ॥१॥**

**॥ यत्पुरुषेणेति ॥**

**यत्पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत ।**
**व॒स॒न्तो अ॑स्यासी॒दाज्य॑ं ग्री॒ष्म इ॒ध्मश्श॒रद्ध॒विः ॥६॥**

देवाः देवत्वयोग्याः । यत् यदा । पुरुषेण हविषा मनसा सङ्कल्पितेन चतुर्मुखाख्यपशुरूपहविषा । यज्ञं विष्णुमुद्दिश्य । ''यज्ञो वै विष्णुर्देवता'' इति श्रुतेः । यज्ञं यागकर्म इत्यावृत्त्या योज्यम् । अतन्वत मनसा अकुर्वत । तदा अस्य यज्ञकर्मणः । वसन्तो वसन्तर्तुः आज्यमासीत् । आज्यत्वेन सङ्कल्पितवन्त इत्यर्थः । एवमग्रेऽपि ग्रीष्मर्तुः इध्म आसीत् । शरदृतुः पुरोडाशरूपहविरासीदित्यर्थः ॥६॥

॥ तं यज्ञमिति ॥

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥७॥

यज्ञं यज्ञसाधनभूतम् । तं पशुत्वेन कल्पितम् । अग्रतः सर्वश्रेष्ठाद्विष्णोः सकाशात् । जातमुत्पन्नम् । यद्वा अग्रतो जातं प्रथमपुत्रमित्यर्थः । पुरुषं चतुर्मुखम् । बर्हिषि दर्भसंस्तरे यज्ञे वा । यज्ञनामसु पाठात् । प्रौक्षन् अद्भिः सेचितवन्तः, 'उक्ष सेचने', सेचनपर्यग्निकरणादिसंस्कारं कृतवन्तः । ये देवाः, ये साध्याः, ये ऋषयः, ते सर्वे । तेन पुरुषरूपेण पशुना । यज्ञं इज्यत्वेन हेतुना यज्ञनामकं प्राक् पुरुषपदेन प्रकृतं विष्णुम् । अयजन्त आराधितवन्तः ॥७॥

॥ तस्माद्यज्ञादिति ॥

तस्माँयज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्याँनारण्यान्ग्राम्याश्च ये ॥८॥

सर्वैः हूयते हविरादिना अन्नेन आराध्यत इति सर्वैः उपजीव्यत इति वा । 'हु दानादानयोः'इत्यतः क्विप् । 'ह्रस्वस्य पिति कृति तुक्' । सर्वैः यज्ञादिकर्मणि हूयत इति वा । 'ह्वय शब्दे' अत्र क्विप् सम्प्रसारणञ्च । तस्मात्सर्वहुतः यज्ञनामकाद्धरेः सकाशात् । तथा सर्वैर्हूयते आहूयते च भगवान् पुरुषो यस्मिन् यज्ञे स सर्वहुत् तादृशात् । तस्मात् प्राक् प्रकृतमानसयज्ञात् निमित्तात् । पृषदाज्यं दधिमिश्रितयज्ञसाधनमाज्यं द्रव्यम् । सम्भृतं सम्पादितं उत्पन्नमित्यर्थः । तथा तस्माद्यज्ञात्सर्वहुत इति प्रथमान्तत्वेन विपरिणम्य अनुवृत्त्या अत्र वर्तते । स यज्ञनामा सर्वहुत् पुरुषः । वायव्यान्वायुदेवताकान् श्वेतपश्वादीन् । आरण्यान् अरण्ये भवान् हरिणप्रभृतीन् । ये च ग्राम्या गवाश्वादयः तांश्च पशून् । चक्रे कृतवान् । आत्मयज्ञार्थमिति आत्मनेपदेन सूच्यते ॥८॥

॥ तस्माद्यज्ञादिति ॥

**तस्माँद्यज्ञात्संर्वहुत ऋचस्सामाँनि जज्ञिरे ।**
**छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्माँदजायत ॥९॥**

तस्माद्यज्ञात्सर्वहुत इति प्राग्वत् । ऋचः सामानि तत्समुदायात्मकः सामवेदः । जज्ञिरे भगवद्बुद्धिस्थाः सृष्टिकाले ब्रह्मादीन्प्रति तदुच्चारितत्वेन व्यक्तिमगमन्नित्यर्थः । ननु प्रसिद्धार्थपरित्यागः कस्मात्क्रियत इति चेत् मैवम् । ''वाचा विरूप नित्यया'' ''नित्ययाऽनित्यया स्तौमि''इत्यादि श्रुतिस्मृति-विरोधात् । न च अस्या एव विरोधात् तत्रैवार्थान्तरमस्त्विति वाच्यम् । ''तदुत्पत्तिवचश्चैव भवेद्व्यक्तिमपेक्ष्य तु'' इति स्मृत्या उत्पत्तिवचनस्यैव सावकाशत्वकथनात् । तस्मात् छन्दाँसि गायत्र्यादीनि जज्ञिरे । तस्माद्यजुश्च अजायत व्यक्तमभूत् । यजुषः अन्ते उक्तिस्तु ''दूरेण ह्यवरं कर्म'' इत्युक्तेः । यजुषश्च आपाततः तत्परत्वात् । तथा दर्शनेन अञ्जसा हरितुष्टिकरत्वाभावात् । अत एवोक्तं श्रीमदाचार्यैः ''वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य'' इति ॥९॥

॥ तस्मादश्वा इति ॥

**तस्मादश्वाँ अजायन्त ये के चोँभयादँतः ।**
**गावोँ ह जज्ञिरे तस्मात्तस्माँज्जाता अंजावयः ॥१०॥**

तस्मात् प्रागुक्तात् यज्ञनामकात् पुरुषात् । अश्वाः अश्वमेधसाधनभूताः तुरङ्गाः अजायन्त ॥ ये के च उभया दतः ॥ ऊर्ध्वाधोभागयोः उभयत्र दन्तवन्तः अश्वतरगर्दभप्रभृतयः । तेऽपि अजायन्त । ह इत्याश्चर्ये प्रसिद्धौ वा । ''वयसि दन्तदतृ'' ''छन्दसि च''इति दन्तपदस्य दत्रादेशः । गावोऽपि तस्मात् जज्ञिरे । अजाः अवयश्च तस्माज्जाताः । तस्मादित्यनेकवारोक्तिः अन्यस्य स्वातन्त्र्येण हेतुत्वनिरासतात्पर्यद्योतनार्था ॥१०॥

इति पुरुषसूक्ते भगवद्यजनसाधनयजुर्वेदाभिव्यक्तिस्थानरूपो
गायत्रीद्वितीयपादाभिव्यक्तो द्वितीयो वर्गः ॥२॥

॥ यत्पुरुषमिति ॥

यत्पुरु॑षं॒ व्यद॑धुः कति॒धा व्य॑कल्पयन्।
मुखं॒ किम॑स्य॒ कौ बा॒हू का ऊ॒रू पादा॑ उच्येते ॥११॥

नन्वत्र सर्वसूक्ते नारायणं पौरुषमानुष्टुभं त्रैष्टुभमन्त्यं इत्यनुक्रमणिकोक्त्या नारायणः ऋषिः प्रतीयते। 'यस्य वाक्यं स ऋषिः'इति नियमात्। सर्वस्याऽपि नारायणवाक्यत्वेन एकादश्या ऋचोऽपि तद्वाक्यत्वं प्राप्तम्। तस्यास्तु प्रश्नरूपत्वं दृश्यते किंशब्दप्रयोगात्। स आक्षेपार्थः किं न स्यादिति चेन्न, विपर्यये पर्यवसानाभावात् अग्रे उत्तरसद्भावाच्च। प्रश्नश्च अज्ञातार्थज्ञानप्रार्थनं। तथात्वाङ्गीकारे च भगवतः सार्वज्ञ्यहानिः। अन्यथा ऋषित्वहानिः। न च वाच्यं स्वयमेव पृष्ट्वा स्वयमेव समाधत्त इति। प्रेक्षावत्प्रवृत्तेर्निष्फलत्वापत्तेरिति। मैवं, रमादिभिः अन्यत्र कृतप्रश्नस्य अत्र अनुवादात्। न हि अनुवादे कृते अज्ञता सम्भवति। अग्रे उत्तरदाने सामर्थ्यदर्शनात्। न च ऋषित्वहानिः, तद्वाक्यत्व सम्भवात्। न जातु वक्तुरिदं वाक्यं नास्तीति शक्यते वक्तुम्। अनुवादस्यैव अनुदयात्। तस्मादेकादश्या प्रश्नं अनूद्य द्वादश्या नारायण एव परिहरतीत्येव युक्तम्। यत् यदा। पुरुषं व्यदधुः देवा यज्ञं अतन्वतेति प्रागुक्तमानसयज्ञे विशेषेण उद्देश्यतया अदधुः धृतवन्तः मनसा ध्यातवन्तः। ''डु धाञ् धारणे'' लङ्। तदा कतिधा केन प्रकारेण। व्यकल्पयन् विकल्पितवन्तः। मनसा विविधतया कल्पितवन्तः। किंकिंजनकाङ्गत्वेन ध्यातवन्त इत्यर्थः। तदेव किञ्चित् व्यनक्ति ॥ **मुखमिति** ॥ अस्य पुरुषस्य। मुखं किंजनकमुच्यते। बाहू च कौ किंजनकावुच्येते। ऊरू च कौ किंजनकौ उच्येते ॥ **पादाविति** ॥ 'कौ' इति अनुषज्यते। किंजनकौ उच्येते इत्यर्थः ॥११॥

॥ ब्राह्मण इति ॥

ब्रा॒ह्म॒णो॑ऽस्य॒ मुख॑मासीद्बा॒हू रा॑ज॒न्यः॑ कृ॒तः।
ऊ॒रू तद॑स्य॒ यद्वैश्यः॑ प॒द्भ्यां शू॒द्रो अ॑जायत ॥१२॥

पृष्टस्य उत्तरं अत्रोच्यते । अस्य पुरुषस्य । मुखं "सप्तसु प्रथमा"इति सूत्रात् मुखादित्यर्थः । ब्राह्मणः ब्राह्मणजात्याक्रान्तः ब्राह्मण्याभिमानी वा । बाहू बाहुभ्याम् । राजन्यः क्षत्रियजात्याक्रान्तः क्षत्रियजात्यभिमानी पवनो वा । कृत उत्पन्नः । वैश्य इति यत् तत् ऊरू ऊरुभ्यां जातम् । वैश्याभिमानी नासिक्यो वायुर्वा । पद्भ्यां पादाभ्याम् । शूद्रः शूद्रत्वावछिन्नपदार्थः, तदभिमानी निर्ऋतिर्वा अजायत इत्यर्थः । पद्भ्यामित्युक्तिबलात् सर्वत्र उक्तदिशा पञ्चमी ध्येया ।

**"यद्यस्माज्जायते चाङ्गात् लोकवेदादिकं हरेः ।**
**तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम्" ॥ इति नारदीयवचनाच्च ।**

अभिमानिविशेषस्तु बृहद्भाष्योक्त इति ज्ञेयम् ॥१२॥

**॥ चन्द्रमा इति ॥**

**चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायत ।**
**मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१३॥**

अस्येत्यनुवर्तते । अस्य पुरुषस्य । मनसः सकाशाच्चन्द्रमा जातः । चक्षोः चक्षुषः । षान्तलोपश्छान्दसः । सूर्यः अजायत । मुखादिन्द्रश्चाग्निश्चाजायत । प्राणाद्वायुः मुख्यवायुः प्रवहो वा अजायतेति ॥१३॥

**॥ नाभ्या इति ॥**

**नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौस्समवर्तत ।**
**पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१४॥**

नाभेः सकाशात् । अन्तरिक्षं तन्नामलोकः तदभिमानी सूर्यो गणपतिर्वा । आसीदजायत । शीर्ष्णः द्यौर्द्युलोकः तदभिमानिगरुडकामौ वा । समवर्तत उदपद्यत । पद्भ्यां भूमिः भूलोकः तदभिमानिधराशनैश्चरौ च । तदुपलक्षितपातालाद्यभिमानिशेषमित्रौ वा । समवर्तत उदपद्यत । श्रोत्रात् कर्णात् । दिशः प्राच्यादयोऽष्टौ तदभिमानिनः लोकपालाः वा समवर्तन्त । तथेति समुच्चये । तेषामित्यर्थे वा । तेषां इन्द्रादिलोकपालानां । लोकान् अकल्पयन् कृतवान् ।

छान्दसो वचनव्यत्ययः । यद्वा तथा अन्तरिक्षाद्युत्पत्तिस्थानेभ्यः । लोकान् तत्रतत्रस्थान् जीवान् । जातान् अकल्पयन् कल्पितवन्तः । 'मुनयः' इति शेषः । यद्वा महरादीन्वा । 'अस्य' इत्यनुवृत्तं पदं प्रथमान्ततया विपरिणम्य अत्र कर्तृत्वेन अन्वेति । अयं पुरुषः लोकान् अकल्पयत् इत्यन्वयः । यद्वा यथा स्वावयवेभ्यो देवान् असृजत तथा लोकानपि कथमित्यतः तद्विवरणं नाभ्या इति । अत्र अभिमानिविशेषः षट्प्रश्नभाष्यतन्त्रसाराद्यैः ज्ञेयः ॥१४॥

॥ सप्तेति ॥

सप्तास्यांऽऽसन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥

यत् यदा । देवाः यज्ञं पूर्वेक्तगुणपुरुषनामकविष्णुं उद्दिश्य । यज्ञं मानसयज्ञकर्म । तन्वानाः कुर्वन्तः । चतुर्मुखाख्यपुरुषपशुं अबध्नन्त । 'यूप' इति शेषः । तदा अस्य मानसयज्ञकर्मणः गायत्र्यादीनि सप्तछन्दांसि परिधयः आहवनीयस्य प्रत्यक् दक्षिणोत्तरस्थापनीयसमिद्विशेषाः आसन् । आहवनीय-गतास्त्रयः परिधयः, उत्तरवेदिगताः परिधयः त्रयः, आदित्यश्च सप्तमः परिधिः प्रतिनिधिरूपः । ''न पुरस्तात्परिदधावादित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहन्ति'' इति श्रुतेः । एवमादित्यसहितसप्तपरिधिस्थाने सप्तछन्दांसि आसन्नित्यर्थः । ''द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः'' इति श्रुतेः । एकविंशतिपदार्थाः त्रिस्सप्तसमिधः एकविंशतिसमिधः कृताः । 'सप्तास्य'इत्यृक् याजुषपाठेऽष्टमत्वेन विहिता । तत्र यज्ञस्यैव प्रतिपादनात् सुघटा सङ्गतिः । बह्वृचपाठे पञ्चदशी । तत्पक्षे सिंहावलोकनन्यायेन सङ्गतिर्द्रष्टव्या ॥१५॥

॥ यज्ञेनेति ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि
प्रथमान्यासन् । ते ह नाकं महिमानस्सचन्त यत्र
पूर्वे साध्याः सन्ति देवाः ॥१६॥

देवाः देवत्वयोग्या मानवाः । यज्ञेन ज्ञानकर्माख्येन यज्ञेन । यज्ञं भगवन्तं पुरुषं अयजन्त । ततस्तेन ज्ञानपूर्वकर्मणा । तानि दैवतानि स्वस्वपदं प्राप्य प्रथमाग्निमुख्यानि । धर्माणि धारकाणि । 'धृ धारणे' इत्यतः औणादिको मन् प्रत्ययः । देवत्वयोग्या मनुष्याः ज्ञानपूर्वकभगवदाराधनरूपयज्ञेन देवत्वं प्राप्य स्वस्वपदस्थाः सन्तः तपनवर्षणादिना मुख्यतो लोकनियामका आसन्नित्यर्थः । ते पुनः महिमानः महात्मानो देवाः । स्वस्वपदाधिकारावसाने नाकं अकं कविरोधि दुःखं तन्नेति नाकम् । नञो नलोपाभावः । न समासो वा । पूर्णसुखात्मकं मोक्षं च ॥ **सचन्त इति** ॥ 'सच् समवाये' व्यत्ययेन लङ्, प्राप्नुवन् । हेति हर्षे प्रसिद्धौ वा । यत्र मोक्षे । पूर्वे पूर्वस्मिन् कल्पे । यद्वा पूर्वे इति प्रथमा पूर्वतनाः पूर्वकल्पे मुक्ता इति यावत् । साध्यादिदेवाः सन्ति तन्नाकमित्यन्वयः ॥१६॥

**इति पुरुषसूक्ते गायत्रीतृतीयपादाभिव्यक्तो भगवत्स्तुतिसाधनसामवेदा-भिव्यक्तिस्थानरूपः तृतीयो वर्गः ॥३॥**

**॥ समाप्तः पौरुषो मन्त्रः ॥७॥**

## ८.विष्णुमन्त्रः

पुरुषसूक्तमन्त्रात् विष्णुमन्त्रस्य अक्षरानाधिक्येऽपि ''वेदाः पुरुषसूक्तगा'' इत्युक्त्या पुरुषसूक्ताभिव्यक्तसर्ववेदानामपि मन्त्रत्वात् तेषां कथनं अष्टमत्वेन युक्तम् । तथापि तज्जपस्य नित्यं दुष्करत्वात् तत्प्रतिपाद्यदेवताया एव मन्त्रजपस्य तत्फलप्रापकत्वात् सुकरत्वाच्च

**''वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुस्सर्वत्र गीयते''॥**

इत्युक्त्या विष्णोरेव सर्ववेदादिप्रतिपाद्यत्वात् तन्मन्त्र एव अष्टमत्वेन विहितः ॥ **विष्णव इति** ॥

**॥ ॐ विष्णवे नम ॐ ॥**

वेवेष्टीति विष्णुः । 'विष्लृ व्याप्तौ' ''विषेः किच्च'' इति नुः । व्यापनशील

इति वा । यद्वा सर्वप्रवेशकः । 'विश प्रवेशने' इति च पठन्ति । अथवा षकारश्चेष्टार्थः णकारो बलार्थः विशेषेण तदुभयशीलः । तदुक्तमनुव्याख्याने -

**''विष्णुनामार्थरूपत्वं संहितादेरथाब्रवीत् ।**
**णकारं च षकारं च बलचेष्टादिकं वदन् ॥**
**तज्ज्ञानपूर्वकत्वेन संहिताध्ययनं तथा ।**
**उपसर्गत्वतो वेस्तु ताछील्यार्थादुनस्तथा ॥**
**णकारश्च षकारश्च नामरूपतया मतौ''** ॥ इति ।

यद्वा पृथिव्यादिभूतानां ब्रह्मादिप्रजानां च गतिः 'वी गतिप्रजनकान्त्यसनखादनेषु' इति धातुः । गत्यर्थात् तस्मात् क्सुप्रत्ययो धातोर्ह्रस्वश्च । अथवा भूमिव्यापकः 'विष्लृ व्याप्तौ'इत्यतः क्नुः । उत वा अधिककान्तिमान् 'वश कान्तौ'इत्यतो नुः । धातोरकारस्येकारः शकारस्य षकारः । 'वी गति'इत्यतो वा कान्तिकर्मणः क्सुः । किंवा अधिभूतप्रवेशकः 'विश प्रवेशने'इत्यतः क्नुः षत्वम् । यद्वा अधिभूतजन्मादीच्छः । कान्तिरिच्छा । अतो वयतेर्वेष्टेश्च पूर्ववद्रूपम् । आहोस्वित् वयति क्रमति त्रिभुवनमिति । पूर्ववद्वयतेर्गत्यर्थात् कर्तरि क्सुप्रत्ययः । उक्तं च मोक्षधर्मे -

**''गतिश्च सर्वभूतानां प्रजानां चापि भारत ।**
**व्याप्तोऽहं रोदसी पार्थ कान्तिश्चाभ्यधिका मम ॥**

**अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत ।**
**क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः''**॥ इति ।

॥ **तस्मै नम इति** ॥ यद्वा सर्वाणि सम्बोधनानि । हे विष्ण विशिष्टचेष्टाबल । 'विः पक्षिपरमात्मनोः'इत्यतः हे वे परमात्मन् । हे नमो नम्येति ॥८॥

॥ इति श्रीनारदानुगृहीतश्रीनिवासाचार्यविरचित
अष्टमहामन्त्रव्याख्यानं समाप्तम् ॥

## १. विष्णुगायत्रीमन्त्रः

अथ क्रमप्राप्तत्वादेकदैवतत्वाच्च तन्त्रसारसङ्ग्रहतृतीयाध्यायप्रोक्तो विष्णु-गायत्रीमन्त्रः ॥ **नारायणायेति** ॥

**॥ ॐ नारायणाय विद्महे वासुदेवाय धीमहि**
**तन्नो विष्णुः प्रचोदयात् ॐ ॥**

अत्र नारायणवासुदेवविष्णुशब्दा व्याख्याताः एव । विद्महे इति उत्तमपुरुषबलात् 'वयम्'इति कर्ता लभ्यते । वयं नारायणाय नारायणार्थं तत्प्रीत्यर्थं इति यावत् । 'तम्'इत्यध्याहरेत् । तं नारायणम् । विद्महे लभामहे जानीमहे वा । 'विद्लृ लाभे' 'विद ज्ञाने'च । [१]केन साधनेन इत्यत उच्यते ॥ **वासुदेवायेति** ॥ वासुदेवप्रीत्यर्थं । तं धीमहि ध्यायाम । यत एवं तत् तस्मात् कारणात् । विष्णुः नः अस्मदुपलक्षितमनआदीन्द्रियाणि । प्रचोदयात् प्रेरयेत् । स्वध्याने भक्त्युपेतत्वरूपार्थप्रकर्षेण अनुकूलानि कुर्यादित्यर्थः । भगवत्प्राप्तिसाधनापरोक्षज्ञानस्य ध्यानोपलक्षितं श्रवणं मननं ध्यानं च साधनम् । तत्कारणं मनआदीन्द्रियानुकूल्यकरणप्रार्थनमिति भावः ।

**''श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।**
**साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते''**॥ इति भाष्योक्तेः ।

श्रोत्राद्यानुकूल्यं विना श्रवणाद्यनुपपत्तिश्च स्वानुभवसिद्धा । तच्च श्रोत्रादीन्द्रियजातं ''श्रोत्रस्य श्रोत्रं'' ''यः प्राणस्य प्रणेता च चक्षुरादेश्च सर्वशः'' इत्यादिना भगवदधीनम् । अतस्तत्प्रार्थनं युक्तम् । अत एव प्रार्थनार्थको लेट् । ननु यथाश्रुतमेव व्याख्यायतां किं तच्छब्दाध्याहारकल्पनयेति चेन्न । विदेर्ध्यायतेश्च सकर्मकत्वादत्र च तदभावात् । विद्यमानचतुर्थ्योः सङ्गत्यभावाच्च । न च अध्याहाराद्विपरिणामस्य औचित्याच्चतुर्थ्या एव विपरिणामेन कर्मत्वसिद्धिर्युक्तेति वाच्यम् । अध्याहारे ''विष्ण्वर्थमर्थयेन्मोक्षं न मोक्षार्थं विभुं तथा'' इत्युक्तिबलेन अधिकार्थलाभात् ॥१॥

॥ इति तृतीयाध्यायप्रोक्तविष्णुगायत्रीमन्त्रव्याख्यानम् ॥

---

१ कस्मै प्रयोजनाय इत्यत उच्यते ॥ वासुदेवायेति ॥ इति भाव्यमिति भाति ।

२. शक्तितत्त्वमन्त्राः

अथ षट्त्रिंशत्तत्त्वमन्त्राः । तत्र आदौ लक्ष्मीनारायणयोः स्वरूपभूतानामेव प्राधान्यात् एकादशमन्त्राः । तत्राऽपि प्रथमं शक्तितत्त्वमन्त्रः ॥ **परायेति ॥**

**॥ ॐ पराय शक्त्यात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

अत्र सम्प्रदायप्राप्तः 'पराय शक्त्यात्मने नम' इत्येव मन्त्रः । 'लक्ष्मीनारायणाभ्याम्'इति तु न मन्त्राङ्गम् । शिष्टैः पठ्यमानत्वन्तु

**''विदुषः कर्मसिद्धिस्स्यात् तथा नाऽविदुषो भवेत् ।**
**ज्ञात्वैव कुर्यात्कर्माणि........................॥''**

इत्यादिना ज्ञानपूर्वकस्यैव विहितत्वात् । अबुधानाञ्च शक्त्यादितत्त्वाभिमानिनः के इत्याकाङ्क्षानुपरमाच्च अबुधजनसङ्ग्रहेण ''लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि'' इति भगवदनुशासनपालनेन च महाफललाभार्थम् । अत एकवचनद्विवचनयोः अन्वयानुपपत्तिः न दोषायेति । ततश्चायमर्थः पराय सर्वोत्कृष्टाय । शक्त्यपरपर्यायसामर्थ्यरूपगुणस्वरूपाय नम इति । पठ्यमानस्य लक्ष्मीनारायणाभ्यामित्यस्य योजनात् ।

**''महालक्ष्मीस्वरूपाणीत्येकादशविदो विदुः ।**
**विष्णोरपि स्वरूपाणि तन्नाम्नैकादशैव तु''॥** इति तन्त्रसारोक्तेः ।

शक्त्यभिमानिलक्ष्मीनारायणाभ्याञ्च नम इति द्रष्टव्यम् । विष्णुनारायणयोः एकत्वेन पृथक् नमनानुपत्तिः न शङ्क्या । अभिमानस्वरूपत्वयोः एकत्वसमावेशे पृथक् नमनलोपनियमाभावात् फलाधिक्याच्च । एतदपेक्षया पराभ्यामित्यादिद्विवचनान्तपाठस्यैव औचित्यादिति चेन्न ।

**''नमः परायेति पूर्वं आत्मने नम इत्यनु ।**
**नामजीवादितत्त्वानां न्यसेत्तत्तत्पदक्रमात्''॥** इति हयशीर्षवचनविरोधात् ।

तर्हि पराय शक्त्यात्मने नारायणाय नम इत्युक्त्वा लक्ष्म्या अपि पृथक् मन्त्रकल्पना कार्येति चेन्न । भवेदेतत् यद्यत्र देवतान्यासविवक्षा स्यात् । न चैवं,

किं नाम तत्त्वानामेव न्यसनम् । पृथक् कल्पनायां तु एकस्य तत्त्वस्य बहुदेवताकत्वेऽपि षट्त्रिंशत्स्थानेष्वेव षट्त्रिंशतामेव निहितत्वेन आधिक्यापातात् । तस्मात् उक्तस्यैव मन्त्रस्य उक्त एवार्थ इति सिद्धम् । एवमग्रेऽपि बोध्यम् ।

ननु लक्ष्मीनारायणाभ्यामिति द्विवचनेन परस्परं भेदः सूचितः । स न युक्तः । प्रमाणविरोधभिया जीवजडकोट्योः रमान्तर्भावस्य दुष्करत्वात् परिशेषेण ईशकोटावेव युक्तत्वादीशकोटौ च मिथो भेदस्यानुक्त्या विरुद्धत्वात् । मैवं, युक्त एव हि भेदः तत्त्वविवेकादौ प्रमितत्वात् । न च भेदषाड्विध्यापातेन पञ्चभेदविषयवाक्यविरोधः । विवक्षाभेदेन सुपरिहरत्वात् । तथा हि यत्र परमश्रुत्यादौ पञ्चभेदोक्तिः तत्र ईशकोटौ महाभेदानङ्गीकारविवक्षा । यत्र तत्त्वविवेकादौ रमाभेदोक्तिः तत्र अवान्तरभेदाङ्गीकारविवक्षेति । किञ्च पञ्चमहाभेदेषु ईशजीवजडानां अनेकस्वरूपत्वेन महत्त्वात् तत्प्रतियोगिकभेदत्रयस्यापि महत्त्वम् । जीवजडान्तर्गतमिथोभेदयोस्तु अनेकभेदरूपत्वान्महत्त्वम् । एवञ्च तद्विलक्षणस्य अवान्तरत्वम् । अत ईशकोटिस्थश्रीविष्णुभेदस्य श्रीविष्णोः अनेकस्वरूपत्वाभावेन तत्प्रतियोगिकस्यापि महत्त्वाभावात् । तत एव अनेकभेदरूपत्वाभावाच्च अवान्तरत्वं युक्तम् । अन्यथा घटपटयोः स्तम्भकुड्योः इत्यादि भेदानां बाहुल्येन पञ्चत्वभङ्गप्रसङ्गात् । अतश्च न पञ्चमहाभेदविषय-वाक्यविरोधः ॥१॥

**॥ ॐ पराय प्रतिष्ठात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

प्रतिष्ठा बहुमानः । यद्वा सर्वपदार्थेषु स्थितिः व्याप्तिरित्यर्थः ॥२॥

**॥ ॐ पराय संविदात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

संवित् अपरोक्षज्ञानं स्वरूपज्ञानं वा । 'समभेदे समीचीने' इति कोशात् ॥३॥

**॥ ॐ पराय स्फूर्त्यात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

स्फूर्तिः स्फुरणं उपस्थितिरित्यर्थः ॥४॥

**॥ ॐ पराय प्रवृत्त्यात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

प्रवृत्तिः प्रवर्तनं उद्योग इत्यर्थः ॥५॥

**॥ ॐ पराय कलात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

कला कौशलम् ॥६॥

**॥ ॐ पराय विद्यात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

विद्या परोक्षज्ञानम् ॥७॥

**॥ ॐ पराय मत्यात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

मतिः मननं विचार इति यावत् ॥८॥

**॥ ॐ पराय नियत्यात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

नियतिः नियमनम् ॥९॥

**॥ ॐ पराय मायात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

माया इच्छा । ''मायेतीच्छा समुद्दिष्टा''इति वचनात् ॥१०॥

**॥ ॐ पराय कालात्मने लक्ष्मीनारायणाभ्यां नम ॐ ॥**

कालः कामपूरणम् । 'कल कामधेनौ' इति धातोः ॥११॥

एवं स्वरूपाभिन्नतत्त्वमन्त्रानन्तरं पञ्चविंशतिर्भिन्नतत्त्वमन्त्राः । तत्रादौ अचेनात् चेतनस्य प्राधान्यात् पुरुषतत्त्वमन्त्रः ॥ पराय इति ॥

**॥ ॐ पराय पुरुषात्मने ब्रह्मवायुभ्यां नम ॐ ॥**

पराय उत्कृष्टाय । पुरुषात्मने पूर्षु देहेषु शयनात्पुरुषो जीवः जीवतत्त्वं तदभिमानिरूपमपि तद्वाच्यं, अतः तस्य आत्मने अन्तर्गताय विष्णवे नमः । जीवतत्त्वाभिमानिभ्यां ब्रह्मवायुभ्याञ्च नम इत्यक्षरार्थः । तस्यार्थस्तु पराय पुरुषतत्त्वाभिमानिब्रह्मवाय्वन्तर्गताय विष्णवे नम इति । ननु शक्त्याद्येकादश-

तत्त्वमन्त्रेषु आत्मशब्दः स्वरूपार्थत्वेन व्याख्यातः न अन्तर्यामित्वेन । किमर्थं ? । सहपाठे समानार्थस्यैव औचित्यात् । मैवं, शक्त्याद्येकादशानां स्वरूपत्वेन उक्तत्वात् । पुरुषादीनां तत्त्वानां तदभिमानिनां ब्रह्मादिदेवानाञ्च भिन्नत्वेन सहपाठेऽपि अर्थान्तरस्यैव युक्तत्वात् । ''जीवेश्वरभिदा चैव'' इति परमश्रुतिः । अत्र उपयोगिविशेषस्तु शक्तितत्त्वमन्त्रव्याख्यानतोऽवगन्तव्यः ॥१२॥

॥ ॐ पराय अव्यक्तात्मने ब्रह्माणीभारतीभ्यां नम ॐ ॥

अव्यक्तं सूक्ष्मतत्त्वगोलः । ननु एतत्तत्त्वन्यासो दक्षिणबाहौ उक्तः । महत्तत्त्वन्यासस्तु पश्चात् वामबाहौ उक्तः । न च एतद्युक्तम् । पुरुषवामाङ्गात् दक्षिणाङ्गस्य श्रैष्ठ्यात् भार्यापेक्षया भर्तृश्रैष्ठ्याच्च दक्षिणाङ्गे ब्रह्माणीभारत्यौ सन्यस्य वामाङ्गे महदभिमानिनोः ब्रह्मवाय्वोः न्यासस्य अनौचित्यात् । सत्यं, तथाऽपि हरेः दक्षिणाङ्गे ब्रह्मवायू तिष्ठतः, वामे तद्भार्ये । अतः तत्प्रतिबिम्बस्य पुरुषस्य सन्मुखत्वेन दक्षिणदिक्स्थब्रह्माणीभारत्योः स्थितिः दृश्यतेऽतः तथान्यासः । न च सन्मुखस्य दिग्विपर्ययेऽपि अङ्गाविपर्ययात् वामाङ्गे एव तयोः स्थितिप्रत्यय इति वाच्यम् । दर्पणादौ दृश्यमानवामाङ्गचिन्हस्य दक्षिणाङ्ग एव दृश्यमानत्वेन बाह्यस्य तथात्वेऽपि प्रतिबिम्बस्य तथात्वाभावात् । न चैवं प्रतिमायां दक्षिणबाहौ ब्रह्मादेः न्यासापातः । प्रतिमाया अपि प्रतिबिम्बरूपत्वेन साधकवदुपपत्तेः । न च तत्राभिमुख्याभावः । पूजकस्थबिम्बाभिमुखत्वात् अघटितघटकेश्वरघटितत्वाद्वा । अन्यथा जीवस्यापि स्वान्तर्गतबिम्बप्रतिबिम्ब-त्वायोगात् । नापि ब्रह्मादेः ब्रह्माद्यानन्तरिकत्वं, पुरुषतत्त्वस्य ब्रह्मादिदेवताकत्वात् । न च पुनरुक्तिदोषः, एकदेवताया अनेकतत्त्वाभिमानित्वस्य बहुशो दृष्टत्वात् । नापि तारतम्यहानिः, ब्रह्मरुद्रादिसृष्टिवत् पूर्वस्यैव प्रयोजकत्वात् । तस्मात् दक्षिणबाहौ एव अव्यक्ततत्त्वन्यास इति सिद्धम् ॥१३॥

॥ ॐ पराय महदात्मने ब्रह्मवायुभ्यां नम ॐ ॥

महत् बुद्धिरूपविकारयुक्तं अव्यक्तम् ॥१४॥

**।। ॐ पराय अहङ्कारात्मने गरुडशेषरुद्रेभ्यो नम ॐ ।।**

अहङ्कारः भूतेन्द्रियदेवतादेहहेतुः ॥१५॥

**।। ॐ पराद मनआत्मने स्कन्देन्द्राभ्यां नम ॐ ।।**

मनः अन्तःकरणम् ॥१६॥

**।। ॐ पराय श्रोत्रात्मने दिग्देवताभ्यो नम ॐ ।।**

श्रोत्रं शब्दग्राहकमिन्द्रियम् । दिग्देवता इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मशेषाः । ननु श्रोत्राद्यभिमानिन्यासः कर्णादौ एव युक्तः न अङ्गुष्ठादौ, कर्णादिः एव श्रोत्राद्यभिमानिस्थानत्वात् इति चेन्न । ''न्यासोऽङ्गुलीषूरुबाहुमध्येषु व्युत्क्रमस्थितः'' इति तन्त्रसारोक्तप्रमाणविरुद्धत्वात् । शुष्कतर्कस्यानुचितत्वेन कर्णादिः श्रोत्राद्यभिमानिस्थानत्वेऽपि न्यासविषयेऽकिञ्चित्करत्वात् । तथात्वे आकाशादीनां स्थानविशेषाभावेन न्यासायोगाच्च । तस्मात् प्रमाणबलेन अङ्गुष्ठादौ एव श्रोत्रादिन्यासो युक्त इति भावः ॥१७॥

**।। ॐ पराय त्वगात्मने प्राणाय नम ॐ ।।**

त्वक् स्पर्शग्राहकमिन्द्रियम् । प्राणो वायुसूनुः । इन्द्रानिरुद्धयोर्मध्ययोग्यतावानित्यर्थः ॥१८॥

**।। ॐ पराय चक्षुरात्मने सूर्याय नम ॐ ।।**

चक्षुः रूपग्राहकमिन्द्रियम् ॥१९॥

**।। ॐ पराय जिह्वात्मने वरुणाय नम ॐ ।।**

जिह्वा रसग्राहकमिन्द्रियम् ॥२०॥

**।। ॐ पराय घ्राणात्मनेऽश्विभ्यां नम ॐ ।।**

घ्राणं गन्धग्राहकमिन्द्रियम् ॥२१॥

॥ ॐ पराय वागात्मने वह्नये नम ॐ ॥

वाक् वचनसाधनमिन्द्रियम् ॥२२॥

॥ ॐ पराय पाण्यात्मने दक्षाय नम ॐ ॥

पाणिः आदानादिक्रियासाधनमिन्द्रियम् ॥२३॥

॥ ॐ पराय पादात्मने जयन्ताय नम ॐ ॥

पादः गतिसाधनमिन्द्रियम् ॥२४॥

॥ ॐ पराय पाय्वात्मने मित्राय नम ॐ ॥

पायुः विष्ठाविसर्गसाधनमिन्द्रियम् ॥२५॥

॥ ॐ पराय उपस्थात्मने मनवे नम ॐ ॥

उपस्थं रेतोविसर्गसाधनमिन्द्रियम् । मनुः स्वायम्भुवः ॥२६॥

॥ ॐ पराय शब्दात्मने बृहस्पतये नम ॐ ॥

शब्दः श्रोत्रग्राह्यो विषयः । अत्र 'पराय शब्दात्मने बृहस्पतये नम' इत्येव मन्त्रः । ''शब्दनामा बृहस्पतिरुदाहृतः'' इति तन्त्रसारोक्तेः । 'बृहस्पतिप्राणाभ्यां नम' इति पाठे तु रुद्रसूनुप्राणः । बृहस्पतेरभ्यर्हितत्वेन तद्वाचकशब्दस्य पूर्वनिपातः । वायुपुत्रप्राणस्य गत्यभिमानित्वेन उक्तत्वात् । अपानादीनाञ्च स्पर्शादिचतुष्टयाभिमानित्वेन वक्ष्यमाणत्वात् प्राणोऽत्र रुद्रपुत्रो ग्राह्यः । ''शब्दाद्याः पञ्च शिवजाः'' इति गीतातात्पर्योक्तेः ॥२७॥

॥ ॐ पराय स्पर्शात्मने अपानाय नम ॐ ॥

त्वगिन्द्रियग्राह्यो विषयः स्पर्शः । एकवचनान्तपाठेऽपानोऽत्र वायुपुत्रो ग्राह्यः । द्विवचनान्तपाठे तु अपाननामानौ वायुरुद्रपुत्रौ ज्ञेयौ । एवं पञ्चविषयतत्त्वमन्त्रेष्वपि विशेषो बोध्यः ॥२८॥

**॥ ॐ पराय रूपात्मने व्यानाय नम ॐ ॥**

रूपं चक्षुर्मात्रग्राह्यो विषयः ॥२९॥

**॥ ॐ पराय रसात्मने उदानाय नम ॐ ॥**

रसः जिह्वेन्द्रियग्राह्यो विषयः ॥३०॥

**॥ ॐ पराय गन्धात्मने समानाय नम ॐ ॥**

गन्धः घ्राणेन्द्रियग्राह्यो विषयः ॥३१॥

**॥ ॐ पराय आकाशात्मने गणपतये नम ॐ ॥**

आकाशः शब्दगुणं द्रव्यम् ॥३२॥

**॥ ॐ पराय वाय्वात्मने वायवे नम ॐ ॥**

वायुः रूपरहितस्पर्शवद्द्रव्यम् । देवता वायुः मुख्यप्राणसुतो मरीचिनामकः। ''प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः'' इत्युक्तेः ॥३३॥

**॥ ॐ पराय तेजआत्मनेऽग्नये नम ॐ ॥**

तेजः उष्णस्पर्शवद्द्रव्यम् ॥३४॥

**॥ ॐ पराय अवात्मने वरुणाय नम ॐ ॥**

आपः शीतस्पर्शवद्द्रव्यम् ॥३५॥

**॥ ॐ पराय पृथिव्यात्मने धरायै नम ॐ ॥**

पृथिवी गन्धवद्द्रव्यम् । धरा धरानामकलक्ष्मीः । केचित् 'शनैश्चरधराभ्यां नम' इति पठन्ति । तच्च तन्त्रसारव्याख्यानशाण्डिल्यतत्त्वादौ शनैश्चरोल्लेखाभावेऽपि षट्प्रश्नभाष्ये ''ततश्शनिः पृथिव्यात्मा'' इति वाक्यलाभेन युक्तम् । मन्त्रोच्चारे तु स्वगुरूक्तानुसारेण व्यवस्था ज्ञातव्येति ॥३६॥

**इति श्रीमन्नारदानुगृहीतेन पुरुषोत्तमाचार्यशिष्येण भीमाचार्यात्मजेन श्रीनिवासाचार्येण विरचितं तन्त्रसारतृतीयाध्यायान्तर्गततत्त्वमन्त्रव्याख्यानं समाप्तिं अगमत् ॥छ॥**

## द्वासप्ततिमन्त्राः

### १. त्रयस्त्रिंशदक्षरवराहमन्त्रः

अथ चतुर्थाध्यायप्रोक्ता मन्त्राः । तत्राऽपि मत्स्यकूर्ममन्त्राणां आदौ वक्तव्यत्वेऽपि तयोः चाक्षुषमन्वन्तरावतीर्णत्वेन तन्मन्त्राणां तत्कालीनोपास्यत्वात् तन्मन्त्रान् अनुक्त्वैव वर्तमानकालस्य वाराहकल्पत्वात् प्रथमं वराहमन्त्रः । तत्रापि आदौ महत्त्वात् त्रयस्त्रिंशदक्षरमन्त्रः ॥ हूमिति ॥

**॥ ॐ हूं नमो भगवते वराहरूपाय भूर्भुवः स्वः**
**पतये भूपतित्वं मे देहि दादापय स्वाहा ॐ ॥**

हूमिति बीजं अव्ययम् । हूयते आहूयतेऽसौ हूम् । ''इमं नो यज्ञमागहि'' इति श्रुतेः । हे यज्ञेषु आह्वानविषयेत्यर्थः । यद्वा हुतं जगद्यस्मिन् विष्णौ इति हूम् । जुहोतेः अधिकरणे मप्रत्ययः । ''कृन्मेजन्त'' इत्यव्ययत्वम् । दीर्घता च निरुक्तत्वात् । ''हरिर्हुश्च हुतमस्मिन् जगद्यतः'' इत्यनुव्याख्यानोक्तेः । हे जगद्रूपद्रव्यहोमाधिकरणेत्यर्थः । हे स्वाहा स्वं स्वभावतः स्वीयमेव हविरादि लोकानां भ्रान्त्या अस्ववत् प्रतीतं आहरतीति आ जहातीति वा स्वाहः । हरतेः जहातेर्वा डः । द्वौ अपि आङ्पूर्वकौ स्वीकारे वर्तेते । स चासौ अश्च आनन्दरूपश्चेति स्वाहाः तत्सम्बुद्धिः हे स्वाहा । ''आनन्दत्वात् अनामाऽसौ'' इति स्कान्दे । ''स्वीयं स्वीकुरुते यस्मात् स्वाहेत्युक्तो जनार्दनः'' इत्यनुव्याख्याने । भगवच्छब्दस्तु पूर्वं व्याख्यातः । एवं वराहरूपाय वरं भक्तश्रेष्ठं देवश्रेष्ठं वा प्राणं अहन्ति न जहाति वा स वराहः ।

अथवा वरान् स्वस्वीयदत्तवरान् न हन्तीति ।

उत वा अयोग्यासुरेभ्यो ब्रह्मरुद्रादिदत्तवरान् आ हन्ति भिनत्तीति ।

अथवा वं ज्ञानं रतिं सुखं आ अभेदेन हन्ति गच्छति प्राप्नोतीति यावत् ।

'वा गतिगन्धनयोः' 'रमु क्रीडायां' 'हन हिंसागत्योः' इति धातुत्रयम् ।

''नेह नानाऽस्ति किञ्चन'' इति श्रुतिश्च । व्रीयतेऽसौ वरः न हीयतेऽसौ अहः स चासौ स चेति । उभयत्रापि 'सद्भिः'इति योग्यतया शेषेण सम्बन्धः । स एव वराहरूपः तस्मै ।

भूर्भुवःस्वःपतये भूर्लोकभुवर्लोकस्वर्लोकानां पालकाय । नमः 'अस्तु'इति शेषः । किमर्थं नमस्करोषीत्यतः स्वाभीष्टं याचते मन्त्रद्रष्टा साधको वा । मे मह्यम् । भूपतित्वं भुवः स्वाम्यम् ।

अथवा भूपलक्षितचतुर्विंशतितत्त्वात्मकदेहस्वाम्यं स्वाधीनदेहवत्त्वमित्यर्थः । यद्वा पूर्वोक्तरीत्या भूशब्दवाच्यवासुदेव एव पतिः स्वामी यस्य तद्भावः तत्त्वं वासुदेवैकभक्तत्वमिति यावत् । देहि वितर । भक्तत्वनिदानं सेवा, सा च इन्द्रियानुकूल्याधीना, इन्द्रियाणि च स्वस्वाभिमानिदेवायत्तानीत्यतः मां कथं याचस इति चेत् ॥ **दादापयेति** ॥ तैः तद्दापय चेति ।

यद्वा हे दाद 'दोऽवखण्डन' इत्यस्मात् औणादिके डप्रत्यये कृते द्यन्ति खण्डयन्ति भक्तिमिति दाः कामादयः शत्रवः तान् आ समन्तात् द्यति नाशयतीति दादः । तत्सम्बुद्धिः हे दाद । 'तत्साधनभूतानि ज्ञानवैराग्यादीनि च' इति शेषः । आपय प्रापय चेत्यर्थः ।

केचित् 'ददापय' इत्यपि पठन्ति । युक्तिं च शंसन्ति 'यद्यपि एतन्मन्त्रोद्धारे श्रीमदाचार्यैः ''दान्त'' इत्युक्तत्वात् उभयथापि सम्भवेन सन्देहानिस्तारः । तथाऽपि तैत्तिरीयपञ्चमोपनिषदि ''देहि देहि ददापय'' इति समाख्याबलेन 'ददापय'इत्येव पाठः समुचितो भातीति । तथापि श्रीमत्सत्यसङ्कल्पतीर्थ-श्रीचरणैः स्वकण्ठरवेण 'दादापय'इत्येव वक्तव्यमित्युक्तत्वात् तद्विरुद्धवक्तृणां असम्प्रदायज्ञत्वेन तदुक्तयुक्तिरस्वरसा । आद्याक्षराधिक्यं तु आधिक्यार्थे । ''आधिक्येऽधिकम्'' इति सूत्रात् ।

अथवा स्वाहाशब्दो त्राण्यर्थकः । तच्छब्दस्य तन्नामसु पाठात् । न केवलं हूं भगवते भूर्भुवःस्वः पतये वराहरूपाय नमोऽस्तु, अपि तु भूपतित्वं मे देहि

दादापय इति स्वाहा वाक् च तस्मै अस्तु । यद्वा नमो देहि दादापयेति स्वाहा वाक् तदर्थमस्त्विति ॥१॥

**२. अष्टाक्षरवराहमन्त्रः**

**॥ ॐ हूमिति ॥**

**॥ ॐ ॐ हूं वराहाय नम ॐ ॥**

जगद्धवनाधिकरणाय वराहाय नमोऽस्त्विति अन्वयः ।

यद्वा हवनोद्देश्याः हूशब्दवाच्याः देवाः तानवतीति हूम् । बीजस्वभावात् नुमन्तत्वम् । एतदा त्रीण्यपि सम्बोधनानि । हे वराहाय वरः श्रेष्ठः वरणीयो वा अहः हानायोग्यः अयः शुभावहविधिः यस्येति वराहायः तत्सबुद्धौ हे वराहायेति । ''अयः शुभावहो विधिः''इत्यभिधानम् । हे नमः नमन्त्यस्मिन् गुणाः ज्ञानानन्दादयः गुणाः उपसर्जनभूताः ब्रह्मादयो वा इति नमः । नमतेः अधिकरणेऽसुन् प्रत्ययः । नपुंसकलिङ्गता तु शब्दानुसारिणी । अथवा प्रथमैकवचनं नमा इति, सम्बुद्धौ तु नम इति । गुणा इति योग्यतया सम्बन्धः । उक्तश्च अनुव्याख्याने ''नमन्त्यस्मिन् गुणा यस्मात् नम इत्येव कथ्यते'' इति ॥२॥

**३. चतुर्दशाक्षरवराहमन्त्रः**

अथ चतुर्दशाक्षरस्तृतीयो वराहमन्त्रः ॥ **नम इति** ॥

**॥ ॐ नमो भगवते महावराहाय स्वाहा ॐ ॥**

भगवते षड्गुणैश्वर्यसम्पन्नाय महावराहाय पूज्यवराहावताराय ।

यद्वा महान् प्रबल : अवरः हिरण्यकशिपुतः कनीयान् हिरण्याक्ष इत्यर्थः ।

यद्वा ''आकारस्तु पितामह'' इत्यनुशासनात् आशब्दवाच्यब्रह्मसकाशात् वरः यस्य सः आवरः हिरण्यकशिपुः । महान् ज्येष्ठः आवरः यस्मात् इति

महावरो हिरण्याक्षः । ''हिरण्याक्षोऽनुजस्ततः'' इति भागवते । तं आ स्वयमेव हन्तीति स तथा तस्मै । नम इति स्वाहा मद्वाक् 'अस्तु'इति शेषः ॥३॥

## ४. श्रीकरमन्त्रः

''वराहैः स्तम्भनं क्षिप्रम्'' इत्युक्तेः स्तम्भनकारकवाराहमन्त्रान्ते स्तम्भन-विषयस्य अपेक्षितत्वात् विषयस्य च सर्वाकाङ्क्षितगमनाभावायाः सम्पद एव योग्यत्वात् तत्कारकाष्टाक्षरश्रीकरमन्त्रः ॥ **उत्तिष्ठेति** ॥

**॥ ॐ उत्तिष्ठ श्रीकर स्वाहा ॐ ॥**

हे स्वाहा स्वेन धनेन अहापयति योजयति स्वानिति स चासौ अश्वेति स्वाहाः तत्सम्बुद्धौ हे स्वाहेति ।

यद्वा स्वाहेति प्रथमैकवचनं, नान्तश्शब्दः । उत्तिष्ठेतिमध्यमपुरुषबललब्धस्य त्वमित्याकारककर्तुः विशेषणम् । 'ओ हाक् त्यागे' । सोऽप्यन्तर्णिच् । तद्विरुद्धार्थकेन नञा योजनार्थोपपत्तिः ।

हे श्रीकर श्रियं सम्पदं करोतीति श्रीकरः तत्सम्बुद्धौ श्रीकरेति ।

यद्वा श्रियै लक्ष्म्यै कं सुखं राति ददातीति । 'रा दाने' ।

अथवा श्रीः स्त्रीरूपा लक्ष्मीः कः पुत्ररूपो ब्रह्मा ताभ्यां रमते स तथा । 'रमु क्रीडायां' तस्मात् डः ।

उत वा शरूपे वायौ रमणात् श्रीः भारती कः वायुः तौ मिथो रमयतीति ।

श्रियि रमायां कराः किरणाः करो हस्तो वा करभारो वा यस्येति ।

श्रियः करौ हस्तौ आलिङ्गनकरणत्वेन स्तोऽस्येति । ''अर्श आद्यच्'' । एवं गुणसम्पन्न त्वं उत्तिष्ठ मह्यं सम्पद्दानाय उद्युक्तो भवेत्यर्थः ॥४॥

## ५.द्वात्रिंशदक्षरनृसिंहमन्त्रः

अपमृत्युराहित्ये हि सम्पद उपयोगः । अतः सम्पत्करश्रीकरमन्त्रानन्तरमेव मृत्युनाशनो द्वात्रिंशदक्षरो नृसिंहमन्त्रः ॥ उग्रमिति ॥

**॥ ॐ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतो मुखम् ।**
**नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॐ ॥**

मात्रकामन्त्रव्याख्याने उग्रशब्दः उक्तार्थः । वीरं विशिष्टा इरा वाणी अन्नं वा यस्य तम् । इराशब्दस्य अन्ननामसु पाठात् ।

विं गरुडं ईरयति प्रेरयति इति वा । 'वीर शूर विक्रान्तौ' इति धातोः विक्रमिणं वा ।

विशेषेण ईं लक्ष्मीं ईरयति स तथेति वा तम् ।

महाविष्णुं महाव्यापकम् । महाविः महापक्षिरूपत्वात् गरुडः तं वाहनत्वेन सम्भजनशीलत्वात् महाविष्णुः । 'षण सम्भक्तौ' इति धातोः । ''ताच्छील्यार्थादुनस्तथा'' इत्यनुव्याख्यानोक्तेश्च । उपसर्गाभावेऽपि षत्वानपगमः छान्दसः ।

ज्वलन्तं दीप्यन्तम् । सर्वतो मुखं तसेः सार्वविभक्तिकत्वात् सर्वतः सर्वेभ्यो मुखं मुख्यम् । सर्वदिक्सन्मुखं इति वा ।

यद्वा सर्वतः सर्वैः योग्यतया 'गुणैः'इति शेषः । मुखं पूर्णम् । ''तथापि मुखशब्दोऽयं पूर्णत्वं ज्ञापयेद्विभोः''इति मार्कण्डेये । भीषणं भयकरम् । ''भीषास्माद्वातः पवते'' इत्यादेः । भद्रं भगं अस्यास्तीति । ''अर्श आद्यच्'' । ''भद्रं भगेन व्याख्यातम्''इत्युक्तेः । भजनीयं वा । 'भज सेवायां' ततो रक् । जस्य च दः । भूताभिद्रवणीयं वा । 'द्रु गतौ'इत्यस्मात् औणादिको ड्प्रत्ययः । [१]उपपदस्य ऊकारान्त्ययोः लोपश्च । कल्याणरूपं वा । 'भदि कल्याणे' इति धातोः । मृत्युमृत्युं मृत्योरपि मृत्युं मारकं नृसिंहं अहं नमामि । नृसिंहशब्द उक्तार्थः ॥५॥

---

१. उपपदस्थस्य ऊकारस्य अकारः अन्त्यस्य च लोपः इति भाव्यमिति भाति ।

### ६. चतुर्विंशत्यक्षरनृसिंहमन्त्रः

एकदैवतत्वात्प्राप्तं तस्यैव चतुर्विंशत्यक्षरं मन्त्रान्तरम् ।। **जय जयेति ।।**

**।। ॐ जय जय नरसिंहाय सर्वज्ञाय**
**महातेजोबलवीर्याय स्वाहा ॐ ।।**

जय जय प्रकाशय प्रकाशय । "नित्यदा जयतो विष्णोः जयस्तस्य प्रकाशनं" इति भागवततात्पर्योक्तेः । 'आत्मानं' इति शेषेण सम्बन्धः । आदराद्विरुक्तिः । इति स्वाहा वाक् । सर्वज्ञाय अशेषज्ञानिने । महातेजोबलवीर्याय प्रत्येकमनवधिकं तेजः प्रकाशः बलं शक्तिः वीर्यं शौर्यं च यस्य तस्मै । नरसिंहाय नृसिंहप्रीत्यर्थं इति यावत् । 'अस्तु'इति शेषेणान्वयः ।

यद्वा जयजयेति सम्बोधनम् । जयेन पराभिभवेन जयति उत्कृष्टो वर्तते स तथा ।

**"जयेर्जयाभिभवयोः आद्येऽर्थेऽसावकर्मकः ।**
**उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः"।। इति वचनात् ।**

अथवा जयं स्वपार्षदं जयनाम्नः अवतारं हिरण्यकशिपुं जयतीति स तथा । किंवा जयात् शत्रुपराभावात् जातं आह्लादं याति स तथा ।

उत वा जयजाय प्रह्लादाय यं ज्ञानं यस्य स तथा । "येति ज्ञानं समुद्दिष्टं" इति भागवततात्पर्योक्तेः । हे जयजय उक्तविशेषणविशिष्टाय नरसिंहरूपाय ते स्वाहा अस्तु इत्यन्वयः ।।६।।

### ७.चतुर्विंशत्यक्षरनृसिंहगायत्रीमन्त्रः

एकदैवतत्वात् अक्षरसाम्याच्च तस्यैव अपरो गायत्रीमन्त्रः ।। नरसिंहायेति ।।

**।। ॐ नरसिंहाय विद्महे महाबलाय धीमहि ।**
**तन्नोऽनन्तः प्रचोदयात् ॐ ।।**

वयं नरसिंहाय नृसिंहप्रीत्यर्थं । तमेव विद्महे प्राप्नुमः । अतो महाबलाय अनवधिकबलाय तत्प्रीत्यर्थमिति यावत् । तमेव धीमहि ध्यायाम । तत्तस्मात् । अनन्तः देशतः कालतः गुणतश्च अन्तरहितो भगवान् । 'स्वध्यानाद्यर्थं' इति शेषः । नः अस्मान् । प्रचोदयात् प्रेरयेत् ॥७॥

## ८. हंसषडक्षरमन्त्रः

एकदैवतत्वात् मृत्युनाशनमन्त्रत्रयान्ते जीवनव्यञ्जकस्य निश्श्वासोच्छ्वासस्य सार्थक्यसिद्धये षडक्षरो हंसमन्त्रः ॥ हंस इति ॥

॥ ॐ हंसः सोऽहं स्वाहा ॐ ॥

हन्तेर्भवि डः । हं शत्रून् हननं सारयति प्रापयतीति हंसः । 'सृ गतौ' इत्यतोऽन्तर्णीतण्यर्थात् कर्तरि डः ।

यद्वा हन्ति गच्छति जानाति वा सर्वमिति । 'हन हिंसागत्योः' । ''वृतृवदिहनी...''ति सः ।

यद्वा अचि ''भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढात्मा वर्णविकृतेः वर्णनाशात् पृषोदरम्''॥ इति सक् ।

अथवा हन्ति त्यजति पूर्वशरीरं, सरति गच्छति नवशरीरं इति हंसो जीवः स कार्यत्वेन अस्याऽस्तीति । ''अर्श आद्यच्'' । उक्तं च भारते-

> ''त्यागात् पूर्वशरीराणां नवानां सश्रयेन च ।
> जीवं हंसमिति प्राहुः तद्धेतुत्वात् हरिं परम्'' ॥ इति ।

यद्वा हापयति जीर्णं शरीरं, सारयति नवं देहं जीवस्येति हंसः । उभयत्राऽपि अन्तर्णिच् । एतादृशो यो हंसः सोऽहं स तस्य अहं 'अस्मी'ति शेषः । तत्प्रतिबिम्बोऽस्मीत्यर्थः । ''सप्तसु प्रथमा''इति हि सूत्रम् । उक्तं चायास्यशाखायां ''भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मीत्येवं ह्युपास्यः परमः पुमान्सः'' इति ।

यद्वा सः अहं अहेयः हानायोग्य इत्यर्थः। उक्तं च ब्रह्माण्डे ''अहं चासौ अहेयतः'' इति। हानायोग्यत्वे हेतुः॥ स्वाहेति॥ स्वान् स्वभक्तान् न हन्ति वा, न हिनोति वा, न हिनस्ति स तथा॥८॥

**९. सप्ताक्षरहंसमन्त्रः**

अथ सप्ताक्षरहंसमन्त्रः॥ ॐ इति॥

**॥ ॐ ॐ हंसः सोऽहं स्वाहा ॐ॥**

उक्तार्थ एव ओङ्कारः। यो गुणपूर्णः स्वभक्तात्यागी जीवानां देहवियोग योगलक्षणमृतिजन्मदाता तदीयोऽहमस्मीत्यर्थः॥९॥

**१०. अष्टाक्षरहंसमन्त्रः**

अथाष्टाक्षरहंसमन्त्रः॥ ॐ ह्रीं इति॥

**॥ ॐ ॐ ह्रीं हंसः सोऽहं स्वाहा ॐ॥**

हरति एति चेति ह्रीम्। 'हृञ् हरणे' 'इण् गतौ' इति धातुद्वयजमिदं रूपम्। यद्वा हृता ई लक्ष्मीः येनेति ह्रीम्। बीजस्वभावान्नुम्। 'लक्ष्मीरीकार उच्यते' इत्यभिधानम्। यद्वा ह्रीः लक्ष्मीः लज्जा वा विद्यतेऽस्येति। मतुबर्थे नुम्। शेषं पूर्ववद्व्याख्येयम्॥१०॥

**११. अष्टादशाक्षरदधिवामनमन्त्रः**

अथ जीवनस्य सार्थक्येऽपि अन्नं विना क्लेशावाप्तेः तत्प्राप्तिसाधनोऽष्टादशाक्षरोऽन्नाधिपतिविष्णुमन्त्रः॥ ॐ नम इति॥

**॥ ॐ ॐ नमो भगवते विष्णवे अन्नाधिपतये स्वाहा ॐ॥११॥**

अन्नस्य भक्षणीयस्य अधिपतये मुख्यस्वामिने। यद्वा अन्नानि तत्कारणौषधयः आ समन्तात् धीयन्तेऽस्यामिति अन्नाधिः भूः तस्याः पतये

पालकाय । एवं च गुणपूर्णाय षड्गुणैश्वर्यसम्पन्नाय सर्वव्यापकाय अन्नस्वामिने नम इति स्वाहा वागस्तु इत्यन्वयः । गुणपूर्णत्वस्यैव प्रपञ्चनार्थं अन्यानि विशेषणानीति ध्येयम् ॥११॥

**१२. वामनमन्त्रः**

अस्यैव दधिवामनमन्त्रत्वात् तत्प्रसङ्गप्राप्तोऽष्टाक्षरवामनमन्त्रः ॥ ॐ वं इति ॥

**॥ ॐ ॐ वं वामनाय नम ॐ ॥**

उक्तार्थ ओङ्कारः । वं इत्यव्ययत्वात्सुखरूपायेत्यर्थः । वस्य सुखार्थता उक्ता ऋग्भाष्ये । बलरूपाय वा । ''सुवः सुबलरूपत्वात्'' इति व्याहृतिसारे । ''स वै बलं बलिनां'' इति भागवते च । अमृतरूपाय वा ''वकारश्चामृतं स्मृतम्'' इति वररुचिः ।

वामनाय वामं द्रविणं अतिसौन्दर्यं वा अस्यास्तीति । पामादित्वान्नः । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः । नमोऽस्त्विति ।

एतन्मन्त्रोद्धारकात् ''अमृतं स्वयमुद्देश्ययुतः सहृदयो मनुः''इति वाक्यात् केचित्प्रकारान्तरेण मन्त्रमुद्धृत्य पठन्ति । ॐ अमृतात्मने नम इति । अमृतः मरणरहितः आत्मा स्वरूपं यस्य । यद्वा अमृतश्चासौ आत्मा चेति विग्रहः । आप्नोति सर्वमिति आत्मा । यद्वा आदत्ते सारमिति । अथवा अत्ति विषयानिति । उत वा अतति व्याप्नोति सर्वमिति आत्मा ।

''यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते''॥ इत्युक्तेः ।

अथवा अमृतानां मुक्तानां आत्मा अन्तर्यामी वा तस्मै नम इत्यर्थः ॥१२॥

**१३. त्रिविक्रममन्त्रः**

अथ वामनस्यैव त्रिविक्रमत्वात् तद्गायत्रीमन्त्रः ॥ **त्रिविक्रमाय इति ॥**

**॥ ॐ त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि ।**
**तन्नो विष्णुः प्रचोदयात् ॐ ॥**

त्रीन् ऋग्यजुस्सामाख्यान् वेदान्, अतीतानागतवर्तमानान् कालान्, सत्त्वरजस्तमोरूपान्गुणान्, भूर्भुवस्स्वराख्यान्लोकान्, देवमानुषदानवान् जीवान्, चेतनाचेतनमिश्ररूपान् पदार्थान् विशेषेण क्रमतीति स तथा तस्मै । ''त्रीणि पदा विचक्रमे'' इति श्रुतेः ।

**''वेदान्कालान्गुणान्लोकान्देवमानुषदानवान् ।**
**चेतनाचेतनान्मिश्रान्पदा त्रीणि विचक्रमे''॥ इति ऋग्भाष्याच्च ।**

विश्वरूपाय विश्वं सर्वं जगत् रूपं प्रतिमास्थानीयं यस्येति स तथा । यद्वा विश्वं पूर्णं रूपं स्वरूपं यस्य तस्मै । ''स विश्वरूपोऽनूनरूपो यतोऽयम्'' इति श्रुतेः । 'विश्वं समस्तं सर्वं च अनन्तं पूर्णमेव च' इत्यभिधानं च । उक्तो विष्णुशब्दार्थः । सङ्गतिश्च पूर्ववदवगन्तव्या ॥१३॥

**१४. षडक्षरपरशुराममन्त्रः**

अथ क्रमप्राप्तस्य परशुरामस्य षडक्षरो मन्त्रः ॥ **रां इति ॥**

**॥ ॐ रां रामाय नम ॐ ॥१४॥**

रमतेऽसौ रः । रमतेः डः । स चासौ अं च स तथा । क्रीडायुक्तब्रह्मरूपायेत्यर्थः । 'अं भवेत्परमं ब्रह्म' इत्यभिधानम् । राति अम्वते चेति राम् । धातुलोपो निरुक्तत्वात् । 'अम्व गतौ' इति धातुः । बीजस्वभावादव्ययत्वम् । रमित्यस्य अग्निबीजत्वात् तद्वाच्यस्याग्नेः आ अन्तः माति गच्छति स तथा । धातूनां अनेकार्थत्वात् । तस्मै अग्न्यन्तस्स्थायेत्यर्थः । नमः 'अस्तु'इति शेषः । ''चूलीपतिः स्वयंवह्निर्भार्गवस्तत्र देवता'' इति पञ्चरात्रवचनात् ॥१४॥

## १५. अष्टाक्षरपरशुरामन्त्रः

अथ अष्टाक्षरः परशुराममन्त्रः ॥ ॐ भां इति ॥

**॥ ॐ ॐ भां भार्गवाय नम ॐ ॥**

भाति भासयति वेति भाम् । 'भा दीप्तौ' स एवान्तर्णिच् वा । बीजस्वभावात् अनुस्वरान्तत्वम् ।

अथवा भां प्रकाशं माति निर्मातीति । 'मा निर्माणे' इति धातुः । निरुक्तत्वात् अकारलोपः ।

यद्वा भानि नक्षत्राणि अश्वयतीति चालयतीति । 'अश्वु गतिपूजनयोः' इति धातुः अन्तर्णीतण्यर्थः । धातोरन्त्यलोपो निरुक्तत्वात् । 'नक्षत्रमृक्षं भं तारा'इत्यभिधानं च ।

तस्मै भार्गवाय भृगोः वंशावतीर्णाय ।

यद्वा भर्गो गायत्रीप्रतिपाद्यो देवः तस्येदं भार्गं स्वरूपं वाति प्राप्नोतीति स तथा । अत एव छलारीत्युपाह्वैः नरसिंहाचार्यैः 'गायत्रीनिरुक्तौ' 'तत् परशुरामाख्यं रूपम्' इत्युक्तम् ।

अथवा भर्गस्य रुद्रस्य इदं भार्गं माहात्म्यं तस्य प्रापकः । अन्तर्णीतण्यर्थस्य 'वा गतिगन्धनयोः' इति धातोः इदं रूपम् । ''विष्णोरेषस्य प्रभृथे हविर्भिः विदेहि रुद्रो रुद्रियं महित्वम्''इति श्रुतेः । तस्मै नमोऽस्त्वित्यर्थः ॥१५॥

## १६. एकाक्षरभार्गवमन्त्रः

अथ तस्यैव एकाक्षरो मन्त्रः ॥ भां इति ॥

**॥ ॐ भां ॐ ॥**

उक्तार्थ एव ॥१६॥

**१७. षडक्षररामन्त्रः**

अथ क्रमप्राप्तस्य रामस्य षडक्षरो मन्त्रः ॥ रां इति ॥

**॥ ॐ रां रामाय नम ॐ इति ॥**

बीजं उक्तार्थम् । रामशब्दोऽपि मात्रकामन्त्रेषु व्याख्यात एव ॥१७॥

**१८. अष्टाक्षररामन्त्रः**

अथ अष्टाक्षरो राममन्त्रः ॥ ॐ रां इति ॥

**॥ ॐ ॐ रां राघवाय नम ॐ ॥**

प्रणवबीजे उक्तार्थे । राघवाय रघुवंशावतीर्णाय । यद्वा रस्य परशुरामस्य वरेण आश्रयदानात् सम्बन्धिनं अघं पापरूपं तपोनामकदैत्यं वाति जानाति । अन्तर्णीतण्यर्थात् गमयति वा स तथा । ''रश्च रामेऽनिले वह्नौ'' इत्यनेकार्थध्वनिमञ्जर्याम् । 'अंहो दुःखव्यसनेष्वघम्' इत्यमरः । ''पुरा वरोऽनेन शिवोपलम्भितो मुमुक्षया विष्णुतनुप्रवेशनम् । स तेन रामोदरगो बहिर्गतस्तदाज्ञयैवाऽऽशु बभूव भस्मसात् । इतीव रामाय स राघवश्शरं विकर्षमाणो विनिहत्य चासुरम् । तपस्तदीयं प्रवदन्मुमोद तदीयमेव ह्यभवत्समस्तम्''इति महाभारततात्पर्यनिर्णये । 'वा गतिगन्धनयोः' इति धातुः । गत्यर्थानां ज्ञानार्थता प्रसिद्धैव । धातूनां अनेकार्थत्वात् प्रमाणबलाच्च वातेर्वधार्थता वा । तस्मै नमोऽस्त्विति ॥१८॥

**१९. एकाक्षररामममन्त्रः**

अथ एकाक्षरो राममन्त्रः ॥ रां इति ॥

**॥ ॐ रां ॐ ॥**

उक्तार्थ एव ॥१९॥

## २०. अष्टादशाक्षरकृष्णमन्त्रः

अथ क्रमप्राप्तोऽष्टादशाक्षरः कृष्णमन्त्रः ॥ **क्लीमिति** ॥

**ॐ क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा ॐ ॥**

कलति बध्नाति जगदिति छिनत्ति वा जानाति वा कामान् दोग्धीति वा क्लीम्। 'कल बन्धने' 'कल छेदने' 'कल ज्ञाने' 'कल कामधेनौ' इति च। ''वर्णागमो वर्णविपर्ययश्च''इति निरुक्तत्वात्। ईङ्कार आधिक्ये।

यद्वा कं सुखं लं ऐश्वर्यं वा अस्यास्तीति क्लीं, बीजस्वभावान्नुम्। 'प्रीतिस्सुखं कमानन्द' इत्यभिधानम्।

अथवा को वायुर्लीयते यस्मिन्निति वा। ''को वायुरिति शब्दितः'' इति वररुचिः। ''प्राणः परस्यां देवतायाम्'' इति श्रुतिश्च। तस्मा इत्यर्थः। कृष्णाय कर्षति नियमात्सकलमिति कृष्णस्तस्मै।

**''यतःकर्षसि देवेश नियमात् सकलं जगत्।**
**अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवित्तमाः''॥ इति मोक्षधर्मे।**

गोविन्दाय गां भुवं धेनुं स्वर्गं वेदं वा अविन्दत्। 'विद्द लाभे', गवादिषु विन्देः संज्ञायामिति शः। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इत्यमरः। गोभिः इन्द्रियैः न विन्यतेऽसाविति वा। यद्वा गोभिः वेदैरेव वेद्यत इति। ''नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति''इति श्रुतेः। गोपीव जनवती जन्मवती पिङ्गला तद्रूपा कुब्जा वा तया लभ्यते स गोपीजनवल्लभः। गोपीसमुदायप्रियो वा। तस्मै तदर्थमिति यावत्। स्वाहा वागस्तु ॥२०॥

## २१. षडक्षरकृष्णमन्त्रः

अथ षडक्षरः कृष्णमन्त्रः ॥ **क्लीमिति** ॥

**॥ ॐ क्लीं कृष्णाय नम ॐ ॥**

भक्तकामदुघाय मेघश्यामाय नमोऽस्त्वित्यर्थः ॥२१॥

**२२. एकाक्षर कृष्णमन्त्रः**

अथ एकाक्षरः कृष्णमन्त्रः ॥ क्लीमिति ॥

**॥ ॐ क्लीं ॐ ॥**

उक्त एवार्थः । सम्बुध्यन्तं आह्वानमिदं इत्यर्थः ॥२२॥

**२३. अष्टाक्षरव्यासमन्त्रः**

अथ कृष्णावतारेण समानकालीनत्वाद्व्यासस्याष्टाक्षरो मन्त्रः ॥ **व्यामिति** ॥

**॥ ॐ व्यां वेदव्यासाय नम ॐ ॥**

विशेषेण आ समन्तात् अत्ति अज्ञानमिति । 'अद भक्षणे' । अत्तेः 'अ' इत्यादेशः । अन्तलोपो वा निरुक्तत्वात् । बीजस्वभावान्नुम् ।

यद्वा विशेषेण आ समन्तात् माति जानातीति । 'मा ज्ञाने' । निरुक्तत्वात् अकारलोपः । विशेषतः सर्वाज्ञाननाशकाय विशेषात् सर्वज्ञाय वा इत्यर्थः । वेदव्यासाय वेदं व्यंसति शाखाभेदेन विभजतीति वेदव्यासः तस्मै ।

यद्वा वेदयति ज्ञापयति तत्त्वं अधिकारिभ्यः इति वेदः विशिष्टः सर्वस्मात् आ समन्तात् स एव इति व्यासः । वेदश्चासौ व्यासश्चेति वेदव्यासः तस्मै । उक्तं च आग्नेयशाखायां ''स व्यासो वीति तमं वै वि सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति''इति । नमोऽस्तु ॥२३॥

**२४. व्यासगायत्रीमन्त्रः**

अथ व्यासगायत्रीमन्त्रः ॥ **पूर्णेति** ॥

**॥ ॐ पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि ।**
**तन्नो व्यासः प्रचोदयात् ॐ ॥**

विद्महे इत्याद्युक्तार्थमेव । पूर्णज्ञानाय अनूनज्ञानाय । पूर्णानन्दाय अपरिमितसुखायेत्यर्थः ॥२४॥

**२५. एकाक्षरव्यासमन्त्रः**

अथ एकाक्षरो व्यासमन्त्रः ॥ **व्यामिति** ॥

**॥ ॐ व्यां ॐ ॥**

उक्तार्थमिदं बीजं संबुध्यन्तं आह्वानार्थमिति ॥२५॥

**२६. हयग्रीवमन्त्रः**

अथ वेदाभिव्यक्तिसमानस्थानत्वात् हयग्रीवमन्त्रः ॥ **हां इति** ॥

**॥ ॐ हां हयग्रीवाय नम ॐ ॥**

हन्ति अज्ञानमिति हाम् । हापयति ज्ञापयति वेति हां वा । 'हन हिंसागत्योः' । गत्यर्थानां ज्ञानार्थत्वात् । अन्तर्णीतण्यर्थश्चायम् । बीजस्वभावान्नुम् ।

अथवा हीयते तत् हं स्वातिरिक्तं सर्वं । ''अन्या वाचो विमुञ्चथ'' इति श्रुतेः । तत् आप्नोति अम्बते वा । 'आप्लृ गतौ' 'अम्ब गतौ' । धातुलोपो निरुक्तत्वात् । तस्मै हयग्रीवाय हयस्य अश्वस्य ग्रीवा इव ग्रीवा यस्येति स तथा तस्मै नमोऽस्तु । एवं मन्त्रान्तराण्यपि व्याख्येयानि ॥२६॥

**२७. कपिलमन्त्रः**

अथ ज्ञानकार्यत्वेन व्याससमानरूपत्वात् कपिलस्य अष्टाक्षरो मन्त्रः ॥ **ॐ कमिति** ॥

**॥ ॐ ॐ कं कपिलाय नम ॐ ॥**

ॐशब्द उक्तार्थः । कं सुखरूपायेत्यर्थः । उक्तार्थः कपिलशब्दः । यद्वा कं सुखं पिबन्ति पातुं समर्था भवन्ति ते कपयः मुक्ताः । कं पियन्ति वा । 'पि गतौ' तान् लाति गृण्हातीति कपिलः । 'ला आदाने' । कंपयन्ति नॄनिति कपयः कामादयः तान् लाति परिवर्तयतीति । 'ला परिवर्तने' तस्मै नमोस्तु ॥२७॥

## २८. दत्तात्रेयमन्त्रः

अथ साङ्ख्यप्रवर्तकानन्तरं योगप्रवर्तकस्य औचित्यात् ध्यानसाम्याद्वा दत्तात्रेयमन्त्रो नवाक्षरः ।। ॐ दमिति ।।

**।। ॐ ॐ दं दत्तात्रेयाय नम ॐ ।।**

ॐइत्यस्य उक्तरीत्या गुणपूर्णयित्यर्थः । ददाति अभीष्टमिति दम् । 'दाण् दाने' । यद्वा द्यति अनिष्टमिति दम् । 'दो अवखण्डने' । इष्टदात्रे अनिष्टनाशकाय वेत्यर्थः । दत्तात्रेयाय । दत्तं स्वात्मदत्तं अस्यास्तीति दत्तः । ''अर्श आद्यच्'' । ''अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान्स दत्त'' इति भागवतोक्तेः । आत्रेयः अत्रेः अपत्यम् । स चासौ स चेति तस्मै नमोऽस्तु ।

।। इति तन्त्रसारोक्तविष्णुमन्त्राः ।।२८।।



## अथ वैदिकमन्त्राः

### २९. षड्चविष्णुसूक्तमन्त्रः

तत्रादौ षड्चवैष्णवसूक्तमन्त्रः ॥ विष्णोर्नु कमिति ॥

**ॐ विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॐ ॥१॥**

अस्य सूक्तस्य मुख्यतया विष्णुः ऋषिः ।

**''मुनिस्तु सर्वविद्यानां भगवान्पुरुषोत्तमः ।
विशेषतश्च वेदानां................''॥ इति ऋग्भाष्योक्तेः ।**

''यस्य वाक्यं स ऋषिः''इति नियमात् एतत् विष्णुवचनम् । विष्णोः सर्वव्यापकस्य । 'मम'इति शेषः । वीर्याणि वेदोक्तपराक्रमान् । कं ब्रह्माणम् । ''हिरण्यगर्भः कः प्रोक्तः'' इत्युक्तेः । नु निश्चयेन । प्रवोचं प्रावोचम् । ''यो वै वेदांश्च प्राहिणोति तस्मै'' इति श्रुतेः । ''तेने ब्रह्म हृदा य आदिकवये'' इति स्मृतेश्च । अडागमाभावश्छान्दसः ''बहुलं छन्दसि''इति सूत्रात् । ननु ब्रह्मण एव कथने किं कारणमित्यत आह ॥ य इति ॥ यः ब्रह्मा ''यश्च धातरि सम्मतः'' इत्युक्तेः । 'गुणगणनाय'इति शेषः । पार्थिवानि भौमानि रजांसि रेणून् । विममे जपकाले मन्त्रावृत्तिगणनायां मालामणिगणनवत् अगणयत् । एतावद्गुणशोधको नान्य इति भावः ।

**''सर्ववेदेषु ये चोक्ता गुणा विष्णोः सुमङ्गलाः ।
तानेव भगवान्ब्रह्मा वेत्ति लक्ष्मीस्ततोऽधिकान् ।
अज्ञाताश्च तया लक्ष्म्या कोटिशः सन्ति ते गुणाः''॥ इति वायवीये ।**

किंच यः उत्तरं ऊर्ध्वं । सधस्थं भुवनं । अस्कभायत् अस्तम्भयत् । ''येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः'' इति हिरण्यगर्भश्रुतेः ।

अपि च यः विचक्रमाणः वये परमात्मार्थं चक्रते करोति कर्मेति विचक्रमाणः । चक्रशब्दस्य कर्मनामसु पाठात् । यद्वा विं परमत्मानं विशेषेण वा चक्रते जानाति स तथा । धातूनामनेकार्थत्वात् । जानमानः सन् इत्यर्थः । त्रेधा प्रातर्मध्यंदिनसायंदिनतृतीयरूपैः त्रिभिःसवनैः । यद्वा ''हा उ हा उ हा उ'' इत्युक्तरीत्या त्रिवारम् । उरुगायः उरु उत्कृष्टं गायति स तथाऽस्ति । अतस्तमेवावोचमिति ।

यद्वा ''प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्मा''इति वचनात् अस्य ब्रह्ममुनिकत्वे तद्वचनमिदं । यः पार्थिवानि भौमानि रजांसि परमाणून् । विममे अगणयत् । यश्च उत्तरं सर्वलोकोपरिष्ठम् । सधस्थं सत्यलोकम् । 'स्वक्रमणेन चलितम्' इति शेषः । अस्कभायत् स्तम्भयामास । यश्च त्रेधा विचक्रमाणः त्रिभिः पदैर्विमातुं प्रवृत्तः । 'ब्रह्माण्डम्'इति शेषः । यश्च उरुगायः उरुभिरुत्कृष्टैः रमाब्रह्मादिभिः बहुभिर्वा गीयते स तथा । इत्यादीनि विष्णोर्वीर्याणि कं नु अधिकारिणं प्रति प्रवोचं साकल्यरूपप्रकर्षेण अवोचमिति सर्ववेदर्षिर्ब्रह्मा अस्मरदित्यर्थः । अडागमाभावश्छान्दसः ''बहुलं छन्दसि''इति सूत्रात् । अत्रत्यकिंशब्दः आक्षेपे न प्रश्नार्थे । अग्रे उत्तराभावात् । न कमपीत्यर्थः । अधिकाराभावादित्याशयः ।

अथवा ''सूक्तं दीर्घतमोदृष्टं विष्णोर्नु कमिति प्रभोः'' इति वचनात् अस्य दीर्घतमोऋषिकत्वेन तद्वाक्यत्वेऽयमर्थः । तस्य विष्णोर्वीर्याणि, कं नु को नु । विभक्तिव्यत्ययश्छान्दसः अतिशयार्थकः । ''व्यत्ययोऽतिशयकुत्सनाभेदेषु'' इति सूत्रात् । प्रवोचं साकल्यरूपातिशयेन प्रवदेत् । न कोऽपीत्यर्थः । ''वेदाहमेतं पुरुषं महान्तम्'' इति ब्रह्मोक्तेः न कोऽपीति कथमित्यतो ब्रवीति ॥ य इति ॥ याति जानाति इति यः ब्रह्मा आदिकवित्वेन प्रसिद्धत्वात् । भौमरेणून् गणितवान् सोऽपि 'न वेद'इति शेषः । शेषं पूर्ववत् ।

''विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि ।
चस्कंभ यस्स्वरभसा स्खलितं त्रिपृष्ठं यन्मां निशाम्य सदनादुरुकम्पमानम्''॥
इति भागवते चोक्तत्वात् ॥१॥

ब्रह्माण्डं त्रिभिः पदैः विमातुं प्रवृत्तस्य भारमिमं कथं सेहे इत्यत आह ॥ **प्रतदिति ॥**

**ॐ प्र तद् विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॐ ॥२॥**

अत्र सर्वत्र ऋक्चतुष्टयेऽविद्यमानयच्छब्दस्थले यच्छब्दाध्याहारः कर्तव्यः । तस्य ''तदस्य प्रियम्''इति मन्त्रस्थतच्छब्देन अन्वयोऽवगन्तव्यः । यो विष्णुः वीर्येण स्वसामर्थ्येन । तत् ब्रह्माण्डम् । प्रतवते बलयति स्वपदभारं सोढुं दृढयतीत्यर्थः । तवश्शब्दस्य बलनामसु पाठात् । अन्तर्णीतण्यर्थोऽयम् । तं विशिनष्टि **॥ मृग इत्यादिना ॥** यः मृगो न भीमः सिंह इव भयङ्करः । कुचरः कुत्सितानां च इव सूर्य इव रः दाहकः रस्य अग्निबीजत्वात् । 'कुशब्दः कुत्सितेऽपि च' 'तरणिश्च उदाहृतः' इति चाभिधानम् । यद्वा कौ पृथिव्यां चरतीति । ''पृथिव्या अन्तर'' इति श्रुतेः । अथवा कुं भूम्युपलक्षितं सर्वं चरति भक्षयतीति । 'गोत्रा कुः पृथिवी पृथ्वी'इत्यमरः । 'चर भक्षणे' इति धातुः । ''अत्ता चराचरग्रहणात्'' इति च सूत्रम् । गिरिष्ठाः गिरौ मेरौ तिष्ठतीति । दैर्घ्यं छान्दसम् । यद्वा सप्तम्या अलुक् गिरि वाचि तिष्ठतीति । गीश्शब्दस्य वाङ्नामसु पाठात् । यस्य विष्णोः । उरुषु उत्कृष्टेषु । त्रिषु विक्रमणेषु पदनिक्षेपेषु । विश्वा सर्वाणि भुवनानि । अधिक्षियन्ति अधिनिवसन्ति । 'क्षि निवासगत्योः'इति धातोः । अत्रायं विवेकः । अधःपदे सप्ततलानि, मध्ये भूलोकः, ऊर्ध्वपदे षड्लोका इति ॥२॥

ब्रह्माण्डदृढीकरणे विष्णोः अपि बलं कुत इत्यत आह ॥ प्र विष्णव इति ॥

**ॐ प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॐ ॥३॥**

गिरिक्षिते मेरुवासिने । उरुगायाय उरुधा गीयमानाय । वृष्णे भक्तकामवर्षकाय विष्णवे । मन्म मननीयं ज्ञानसहितं वा । 'मनु अवबोधने' ततः साहित्यार्थे मन् प्रत्ययः । स्वरूपभूतं वा । शूषं बलम् । तस्य तन्नामसु पाठात् । प्र प्रकर्षेण एतु विद्यते । धातूनामनेकार्थत्वात् । लडर्थे लोट् । ''स वै बलं बलिनां चापरेषाम्'' इति भागवते । किंच य एको विष्णुः । प्रयतं विस्तृतम् । दीर्घं लम्बम् । इदं एतत्कालविशिष्टम् । सधस्थं ब्रह्माण्डम् । तृभिरित् त्रिभिरेव । पदेभिः पदैः । छान्दसत्वात् भिस ऐस्त्वाभावः । विममे गणितवान् ॥३॥

ननु विष्णोः बलरूपत्वेऽपि ब्रह्माण्डस्य त्रिपदगणनेन महान् क्लेशस्स्यात् अत आह ॥ **यस्येति** ॥

**ॐ यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॐ ॥४॥**

यस्य विष्णोः । त्री त्रीणि पदानि । मधुना सुखेन । ''मधु नाम सुखं विद्यात्'' इत्युक्तेः । पूर्णा पूर्णानि । अनेन भगवतोऽवयवावयविभेदाभावः सूचितः । यद्यपि लोके सुखपूर्णत्वं आत्मनो दृष्टं नावयवस्य, तथापि विष्णोः चिच्छरीरत्वेन लोकविलक्षणत्वात् युक्तमुक्तम् । तत्काले माऽस्तु क्लेशः । अग्रे सुखक्षीणतायां स्यादित्यत उक्तम् ॥ अक्षीयमाणेति ॥ स्वधया सुखेन । स्वधाशब्दस्य सुखनामसु पाठात् । अक्षीयमाणा न क्षीयन्ते तानि अक्षीयमाणानि सन्ति । मदन्ति हृष्यन्ति । 'मदि हर्षे' इति धातोः । सर्वेषु विद्यमानं कालसामर्थ्यं भगवति कथं नास्ति तत्राह ॥ य इति ॥ यः विष्णुः । एक उ एक एव । त्रिधातु प्रकृतिपुरुषकालधारकः । न केवलं प्रकृत्यादित्रितयधारकः किन्तु पृथिवीं द्यामुत द्युलोकञ्च । विश्वा सर्वाणि भुवनानि च । दाधार दधार । कालस्यापि धारकत्वान्न कालसामर्थ्यं तस्मिन्निति भावः ॥४॥

पूर्वं यच्छब्दः उक्तः तदन्वयमाह ॥ तदस्येति ॥

**ॐ तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॐ ॥५॥**

तत् तस्य विष्णोः । परमे नित्यसन्निधानयोग्यत्वात् उत्कृष्टे । पदे शालग्रामादिरूपस्थाने । अभि अभिषिक्तम् । उपसर्गाणां क्रियया असन्निधाने कर्तृकर्मादिसाधनसहितक्रियावाचकत्वात् । उत्सः भागीरथ्यादिप्रस्रवणरूपम् । 'उत्सः प्रस्रवणं वारि' इत्यमरः । अस्य परब्रह्मरूपस्य । ''अः इति ब्रह्म'' इति श्रुतेः । प्रियं प्रीतिविषयम् । पाथः उदकम् । 'कबन्धमुदकं पाथः'इत्यमरः । अहं अश्यां पिबेयम् । 'अशु भोजने' इति धातोः । आशीर्लिङ् । उत्तमपुरुषैकवचने यासुडागमे मिपः अमादेशे अश्यामिति रूपम् । अत्र कर्ता मन्त्रद्रष्टा । पाथो विशिनष्टि ॥ **यत्र इति** ॥ यत्र पाथसि । देवयवः देवत्वमिच्छवः । देवशब्दात् क्यजन्तात् छन्दसि उ प्रत्ययः । नरः पुरुषाः । मदन्ति हर्षं प्राप्नुवन्ति । 'मदि हर्षे' इति धातोः । फलमाह ॥ **स इति** ॥ स तीर्थपानकर्ता । उरुक्रमस्य उरुः उत्कृष्टः क्रमः पादविक्षेपः यस्य त्रिविक्रमरूपस्य इत्यर्थः । बन्धुः प्रेमास्पदो भवति । हि श्रुत्यादिप्रसिद्धम् । मध्वः ''मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्'' इति वचनात् । आनन्दतीर्थनामा वायोः तृतीयावतारः । इत्था इत्थमेव अभिषेकादिकं कृत्वा विष्णुबन्धुर्जात इत्यर्थः । यद्वा यः बन्धुर्विष्णुप्रेमास्पदः । इत्था सत्यः । तस्य तन्नामसु पाठात् । निश्चित इत्यर्थः । स मध्वः पूर्वमध्वो ब्रह्मा । उरुक्रमस्य अस्य विष्णोः । परमे उत्तरे पदे । यत् उत्सः, अभि अभिषिषेच यत्र च पाथसि देवयवः नरः मदन्ति तत् अस्य विष्णोः प्रियं पाथः गाङ्गमम्भः अहमश्यामित्यन्वयः ॥५॥

किं फलं अपेक्ष्य तीर्थप्राशनं इच्छसीत्यत आह ॥ **ता वामिति ॥**

**ॐ ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॐ ॥६॥**

उं शङ्करं अवतीति ऊः ब्रह्मा उः शङ्करश्च तदादयः वः । बहुवचनमाद्यर्थे । तेषां वां ब्रह्मरुद्रादिलोकपालानां इत्यर्थः । वास्तूनि वासयोग्यानि । यद्वा वामित्यस्य छान्दसत्वेन वचनव्यत्ययात् ते इत्यर्थः । वास्तूनि संनिधानस्थलानि । ता तानि पदानि । गमध्यै गमनाय गन्तुमिति यावत् । वयं उश्मसि कामयामहे । 'वश कान्तौ' इति धातोः । 'इदन्तो मसि'इति इत् । पदानि विशिनष्टि ॥ **यत्रेति ॥** यत्र पदेषु गावो गताः । भूरिशृङ्गाः भूरीणां बहूनां मध्ये शृङ्गाः प्रधानाः मुक्ताः वर्तन्ते इति यावत् । "तद्धाम परमं मम" इति भगवदुक्तेः । अथवा भूरीणि बहूनि बहुनामसु पाठात्, शृङ्गाणि गवाश्रितत्वाच्छटाः यासां ताः । "शृङ्गं श्रयतेर्वा" इति निरुक्तेः । गावो रश्मयः रश्मिनामसु पाठात् । अयासः अनपगाः सन्ति । ननु कथं पदानि कामयसे ? तेषामेव असत्त्वात् इत्याशङ्कां आश्चर्योक्त्या उपहसितपूर्वकं प्रत्यक्षप्रमाणोपन्यासेन परिहरति ॥ अत्राहेति ॥ अह इत्याश्चर्ये । अत्र अस्मिन् लोके च । उरुगायस्य बहुधा गीयमानस्य । वृष्णेः भक्तकामवर्षकस्य हरेः । तत् परमं उत्कृष्टम् । भूरि पूर्णं ध्वजवज्रादिचिह्नैरन्यूनमित्यर्थः । पदं पादनिक्षेपः । अवभाति 'गयाप्रदेशे' इति शेषः । "गयाशिरसि...." इति निरुक्तत्वात् । अनेन प्रत्यक्षेण 'उत्तरं पदद्वयं सत् वेदोक्तत्वाद्गयशिरस्स्थपदवत्' इत्यनुमानेन "त्रीणि पदा विचक्रमे" इत्यागमेन च सिद्धत्वेऽपि असत्त्वेन शङ्कमानस्य किं वक्तव्यम् ? परमाश्चर्यमिदं इत्यर्थः ॥६॥

३०. इन्द्रसूक्तमन्त्रः

अथ इन्द्रनामकभगवतः पञ्चदशर्चो मन्त्रः ॥ यो जात इति ॥

**ॐ यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मन्हा स जनास इन्द्रः ॐ ॥१॥**

यः भगवान् जात एव प्रादुर्भूत एव न त्वस्मदादिवज्जडदेहयुक्तः इति भावः । 'जनि प्रादुर्भावे' इति धातोः । ''प्रादुर्भावो हरेर्जनिः'' इत्युक्तेश्च । प्रथमो मुख्यः । मनस्स्वान् ज्ञानी । 'मनु ज्ञाने' इति धातोः । देवः दिव्यति जगत्सर्जनादिना क्रीडति स तथा । 'दिवु क्रीडे'त्यादि धातोः । देवान् स्वभक्तान् । ''स्वभावतः प्रियत्वात्तु सदा देवप्रियो हरिः''इति वचनात् । क्रतुना रक्षणादिकर्मणा । क्रतुशब्दस्य कर्मनामसु पाठात् । पर्यभूषत् शोभयामास । स्वस्वकार्येषु प्रवर्तनादित्यर्थः । अन्तर्णीतण्यर्थोऽयम् । यस्य इन्द्रस्य । शुष्मात् बलात् । शुष्मशब्दस्य बलनामसु पाठात् । रोदसी द्यावापृथिव्यौ । ''द्यावाभूमी च रोदसी'' इत्यनुशासनात् । अभ्यसेतां अभ्यस्येतां निरस्ते भवेताम् । अपरिमिता व्याप्तिरस्येति यावत् । नृम्णस्य सुखरूपस्य । नृम्णशब्दस्य सुखनामसु पाठात् । मह्ना महिम्ना । सः भगवान् । जनासः जनानां ''सप्तसु प्रथमा'' इति सूत्रात् । यद्वा जनासः इति संबोधनम् । इन्द्रः स्वामी । यद्वा इन्द्रशब्दप्रवृत्ति-निमित्तगुणवान् । 'अस्ति'इति शेषः ॥१॥

॥ यः पृथिवीमिति ॥

**ॐ यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान्प्रकुपिताँ अरम्णात् । यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इन्द्रः ॐ ॥२॥**

यो देवः । [१] व्यधमानां व्यथमानाम् । ''बहुलं छन्दसी''ति थस्य च धः ।

१. उपलब्धपाठेषु ''व्यथमानां''इति श्रूयते । पाद्मी श्रीनिवासाचार्यैस्तु ''व्यधमानां''इति पाठः उद्धृतः ।

दैत्यैरुपद्रुतामित्यर्थः । पृथिवीं अदृंहत् दैत्यान् हत्वा सुखमातनोत् । यश्च प्रकुपितान् लोकसंहर्तॄन् पर्वतान् । अरम्णात् चिछेद । यश्च अन्तरिक्षं वरीयः विस्तृतम् । विममे चकार । यश्च द्यां द्युलोकम् । अस्तभ्नात् संस्तम्भितवान् । स जनास इन्द्रः ॥२॥

॥ यो हत्वेति ॥

**ॐ यो हत्वाऽहिमरिणात्सप्तसिन्धून्यो गा उदाजदपधा वलस्य । यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः ॐ ॥३॥**

यो देवः अहिं नदीनां प्रतिरोद्धारं अहिनामानं असुरम् । हत्वा । सप्तसिन्धून् प्रसिद्धसप्तनदीः । अरिणात् समुद्रं गमयामास । यश्च बलस्य बलासुरेण । अपधाः गुहायां पिहिताः । गाः उदाजत् निर्गमयामास । 'अज गतिक्षेपयणयोः' इति धातोः । यश्चाश्मनोः शिलाद्वयस्य गुरुशिष्याख्ययोः अरण्योः वा । अन्तः मध्ये । सङ्घर्षणेन अग्निं ज्योतिः । यद्वा अग्रे आदौ नीयते प्रवर्त्यते लोकोऽनेन इति अग्निः ज्ञानम् । प्रवृत्तिकारणेच्छाया अपि ज्ञानकार्यत्वात् । जजान उत्पादयामास । यश्च समत्सु युद्धेषु । संवृक् सम्यक् वृणोति स्वभक्तानिति तथाऽस्ति । स जनास इन्द्रः ॥३॥

॥ येनेमा इति ॥

**ॐ येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः । श्वघ्नीव यो जीगिवाँ लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॐ ॥४॥**

येन देवेन । विश्वा सर्वाणि । इमाः इमानि समस्तानि प्राणिजातानि । च्यवना च्यवनानि स्वस्वव्यापारप्रेरितानि कृतानि । यश्च दासं हिंसकम् । 'दासु हिंसायां' इति धातोः । असुरजातं इत्यर्थः । वर्णं अधरं वर्णतः अधरम् । गुहायां

तमसि । अकः अकरोत् । यश्च श्वघ्नीव खातमिव । लक्षं बहुविधं धनम् । जीगिवान् जितवान् प्राप्तवानिति यावत् । यश्च अर्यः स्वामी । पुष्टानि बहुधनानि । आदत् ददाति । स जनास इन्द्रः ॥४॥

॥ यं स्मेति ॥

**ॐ यं स्मा पृच्छन्ति कुह सेतिं घोरमुतेमाहुर्नैषो अस्तीत्येनम् । सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॐ ॥५॥**

यं देवम् । सः कुह कुत्र अस्तीति पृच्छन्ति वादरसिका जनाः । यं च देवं घोरमाहुः केचन । उत केचन सौम्यमाहुः । उत केचन एनमस्तीत्याहुः । उत केचित् एषः नास्त्यीत्याहुः । तत्र स्वयं सिद्धान्तमाह । सः विज इव पक्षिपोत इव । पुष्टीः अभिवृद्धीः । आमिनाति सम्यक् प्राप्नोति । पक्षिपोतः दिने दिने यथा प्रवर्धते तथा अयमपि प्राणिहृदयेषु नित्यं अभिवृद्धो वर्तते इति यावत् । स एवम्भूतोऽयं इन्द्रः । अस्मै तत्त्वज्ञानिने भक्ताय । श्रत् बलम् । धत्त धत्ते ददाति । स जनास इन्द्रः ॥५॥

॥ यो रध्रस्येति ॥

**ॐ यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः । युक्तग्रावणो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः ॐ ॥६॥**

यो रध्रस्य समुद्रस्य उत्तमाधिकारिणः । चोदिता प्रेरकः । यश्च कृशस्य मध्यमाधिकारिणोऽपि चोदिता । यश्च ब्रह्मणः तदुभयकृतस्तोत्रस्य चोदिता । यश्च नाधमानस्य याचमानस्य फलापेक्षिणः । कीरेः त्वत्पूजात्मककर्मकर्तुः । युक्तग्राव्णः सोमसवनार्थं उपात्तपाषाणस्य । सुतसोमस्य सोमाभिषवं कृतवतो यजमानस्य अविता । यश्च सुशिप्रः सुन्दराकृतिः । यद्वा सुप्रशंसेत्यादेः सु

अकृच्छ्रं कृच्छ्रवत् कष्टं जन्ममृत्युजरादि तद्रहितं अकृच्छ्रं । शं सुखमस्यास्तीति शि । सु जन्ममृत्युजरारहितं शि सुखपूर्णं अत एव प्रकृष्टशरीरं यस्य सः सुशिप्रः । स जनास इन्द्रः ॥६॥

॥ यस्याश्वास इति ॥

**ॐ यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः । यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः ॐ ॥७॥**

यस्य प्रदिशि प्रतिदिशम् । गमनशीलाः अश्वासः अश्वाः सन्ति । यस्य गावः सन्ति । यस्य ग्रामाः सन्ति । वशवर्तिगोग्रामवान् इत्यर्थः । यस्य विश्वे रथासः समस्तरथाः सुखविशेषाश्च सन्ति । यः सूर्यं जजान । यश्च उषसं सूर्यपुत्रीं जजान । यः अपां नदीनां कर्मणां वा नेता । यद्वा "आपा इत्यापः" इति श्रुतेः । सर्वदेवाः त्रिलोकवासिन आपः । तेषां नेता । स जनास इन्द्रः ॥७॥

॥ यं क्रन्दसीति ॥

**ॐ यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः । समानं चिद् रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः ॐ ॥८॥**

परे श्रेष्ठाः । अमित्राः शत्रवः । अवरे अमित्राः । एवं उभया उभये उभौ शत्रू । यं इन्द्रम् । क्रन्दसी आक्रन्दयुक्ते । संयति युद्धे । वि विपरीतं निर्भर्त्सनपूर्वकं इति यावत् । ह्वयेते आह्वयेते । 'रथ गतौ'इति धातोः, गत्यर्थानां ज्ञानार्थत्वाच्च, रथं ज्ञानम् । तस्थिवांसा आश्रितौ । चित् परावररूपेण उभौ कौचित् । यं नाना नानाप्रकारेण । समानं बहुमानसहितम् । हवेते आह्वयेते । स जनास इन्द्रः ॥८॥

॥ यस्मादिति ॥

**ॐ यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते । यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः ॐ ॥९॥**

यस्माद्देवादृते यस्य प्रसादमन्तरेण । जनासः जनाः । न विजयन्ते । युध्यमानाः जनाः । अवसे स्वरक्षणाय । यं देवम् । हवन्ते आह्वयन्ति । यश्च विश्वस्य ब्रह्मादितृणान्तस्य प्राणिजातस्य । सूर्यकादेः सूर्य इव प्रतिमानं सदृशः सर्वप्राणिनां बिम्ब इति यावत् । बभूव । यश्च अच्युतच्युत् वरादिना अच्युतानपि च्यावयतीति स तथा । स जनास इन्द्रः ॥९॥

॥ यः शश्वत इति ॥

**ॐ यः शश्व॑तो मह्येनो दधा॑नानम॑न्यमानाञ्छर्वा॑ जघान॑ । यः शर्ध॑ते नानुददा॑ति शृध्यां यो दस्योर्हन्ता स ज॑नास इन्द्रः ॐ ॥१०॥**

यः शश्वतः शाश्वतस्सन् । महि महत् । एनः पापं मिथ्याज्ञानादिरूपम् । दधानान् तमोयोग्यान् । अत एव अमन्यमानान् तत्त्वज्ञानरहितान् । सर्वा सर्वान् । यद्वा हिंसकान् । जघान तमसि प्रक्षिप्तवान् । यश्च शर्धते बलवते परब्रह्मणे । श्रृध्यां स्पृहणीयान् चरुपुरोडाशादीन् । नानुददाति तं च जघान । यश्च दस्योश्चोरस्य हन्ता स जनास इन्द्रः ॥१०॥

॥ यः शम्बरमिति ॥

**ॐ यः शम्ब॑रं पर्व॑तेषु क्षियन्त॑ं चत्वारिंश्यां शरद्यन्वविन्दत् । ओजायमा॑नं यो अहिं जघान दानुं शया॑नं स ज॑नास इन्द्रः ॐ ॥११॥**

यः पर्वतेषु क्षियन्तं निवसन्तम् । शम्वरं तन्नामकं असुरम् । चत्वारिंश्यां शरदि चत्वारिंशद्वर्षेषु । अनु अन्विष्य । अविन्दत् लब्धवान् । लब्ध्वा च जघानेति सम्बन्धः । यश्च ओजायमानं ओजस्विनां वरम् । शयानं नदीमार्गं प्रतिरुध्य पर्वतेषु शयानम् । दानुं दनुपुत्रम् । अहिं तन्नामानं असुरम् । जघान । स जनास इन्द्रः ॥११॥

॥ यः सप्तरश्मिरिति ॥

ॐ यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून् । यो रौहिणमस्फुरद् वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॐ ॥१२॥

यः सप्तरश्मिः सम्प्राप्तरश्मिः । वृषभः श्रेष्ठः । तुविष्मान् बलवान् । यः नदीप्रतिबन्धकदैत्यान् हत्वा सप्तसिन्धून् सप्तविधा नदीः । सर्तवे समुद्रं प्रति गन्तुम् । अवासृजत् व्यसृजत् । किंच यः वज्रबाहुः सन् वज्रं गृहीत्वा । द्यां स्वर्गं । आरोहन्तं रौहिणं तन्नामानमसुरम् । अस्फुरत् अधस्तात् अपातयत् । स जनास इन्द्रः ॥१२॥

॥ द्यावा चिदिति ॥

ॐ द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते । यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॐ ॥१३॥

अस्मै यस्मै । द्यावा द्यौः । पृथिवी चित् पृथिव्यपि । एते द्यावापृथिवी । नमेते प्रह्वीभवतः । अस्य यस्य देवस्य । शुष्मात् चित् वलादपि । पर्वताः भयन्ते बिभ्यति । यश्च सोमपाः । वज्रबाहुः वज्रवदभेद्यबाहुः । यो वज्रहस्तः वज्रधरः । द्यां स्वर्गं । आरोहन्तं आरुहन्तम् । निचितः संज्ञातो भवति । चिति संज्ञाने । स जनास इन्द्रः ॥१३॥

॥ यः सुन्वन्तं इति ॥

ॐ यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती । यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॐ ॥१४॥

यो देवः सुन्वन्तं अभिषवणं कुर्वन्तं अवति । यः पचन्तं चरुपुरोडाशादिकं पक्वं कुर्वन्तं अवति । यश्च शंसन्तं शंसितारं अवति । यः शशमानं शस्त्रेण स्तुवन्तं अवति । यस्य ऊती अभिप्रायः । ब्रह्म स्तोत्रम् । प्रतिवर्धनं वर्धनहेतुः । यस्य सोमः गृहेषु पातव्योऽस्ति । यस्येदं राधः समस्तसिद्धिजातं अस्ति । स जनास इन्द्रः ॥१४॥

**॥ यः सुन्वते इति ॥**

**ॐ यः सुन्वते पचते दुध्र आ चिद् वाजं दर्दर्षि स किलासि सत्यः । वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ॐ ॥१५॥**

हे इन्द्र यस्त्वं सुन्वते पचते च जनाय । आ समन्तात् । वाजं अन्नम् । दध्रः दुग्धवानसि । दर्दर्षि शत्रून्विदारयसि । स त्वं सत्यः साधुगुणपूर्णोऽसि किल । 'ओहाक् गतौ' इत्यतः कः । विश्वं जहाति गच्छति प्रेरकत्वेनेति विश्वहः । तत्सम्बुद्धि हे विश्वह । इन्द्र ते वयं प्रियासः प्रियाः । अत एव सुवीरासः सुवीर्यवन्तः सुपुत्रवन्तो वा । विदथं ज्ञानिप्रियम् । आ समन्तात् 'शिष्येभ्यः' इति शेषः । वदेम त्वन्महिमानं व्याख्यास्यामः ॥१५॥

॥ इति इन्द्रनामभगवत्सूक्तस्य व्याख्यानं समाप्तम् ॥३०॥

## ३१. चतुर्दशर्चविष्णुसूक्तमन्त्रः

अथ चतुर्दशर्चविष्णुसूक्तमन्त्रः ॥ **परो मात्रयेति** ॥

**ॐ परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॐ ॥१॥**

तन्वा । स्वमूर्त्यैव । वृधान अपरिच्छिन्न पूर्णेत्यर्थः । हे विष्णो त्वं मात्रया मितेः पञ्चम्यर्थे तृतीया । परोऽसि अपरिमितोऽसीत्यर्थः । अतः केऽपि देवाः, ते तव । महित्वं महिमानम् । न अन्वश्नुवन्ति न प्राप्नुवन्ति । हे विष्णो उभे अभिमन्यमानाभिमानिभेदेन द्विविधे । रजसी द्यावापृथिव्यौ । रजसीशब्दस्य द्यावापृथिवीनामसु पाठात् । । पृथिव्याः तदुपलक्षितसर्वस्मात् । परमस्य उत्कृष्टस्य । ते त्वदीये त्वदधीने इत्यर्थः । विद्म जानीमहे । कुत एतदुपलब्धं अत आह ॥ **त्वं इति** ॥ 'अनयो'रिति शेषः । देवत्वं दिव्यति जयतीति देवः तस्य भावः तत्त्वम् । 'दिवु क्रीडाविजिगीषे'त्यादिधातोः । ''द्योतनाद्विजयात्कान्त्या'' इति देवशब्दनिरुक्तेर्ऋग्भाष्ये । वित्से प्राप्नोषि 'विद्लृ लाभे' ॥१॥

॥ न त इति ॥

**ॐ न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप । उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॐ ॥२॥**

हे विष्णो देव । ते तव । महिम्नः परं अन्तं सीमानम् । जायमानो न प्राप्नोति । जातो नाप । इदमुपलक्षणम् । जनिष्यमाणोऽपि नाप्स्यतीत्यर्थः । तत्र हेतुमाह ॥ **उदस्तभ्ना इति** ॥ त्वं ऋष्वं विस्तृततया महान्तम् । ऋष्वशब्दस्य महन्नामसु पाठात् । बृहन्तं लम्बतया महान्तम् । नाकं स्वर्गोपलक्षितोपरितनान् लोकान् । उदस्तभ्नाः । उपरि अस्तम्भयः । न केवलं ऊर्ध्वलोकस्तम्भनमेव कृतवानसि ।

किन्तु एतं लोकमपि धत्स इत्याह ॥ दाधर्थेति ॥ पृथिव्याः प्राचीं ककुभं प्राच्युपलक्षिताः सर्वा दिशश्च । दाधर्थ धृतवानसि समन्तात् पृथिवीं धारयसीत्यर्थः ॥२॥

**॥ इरावतीति ॥**

**ॐ इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या । व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥३॥**

हे भगवन् त्वं हि यस्मात् । इरावती ''इच्छानुरूपं तु सुखं इरेत्येव प्रकीर्तितं'' इत्यैतरेयभाष्योक्तेः इरा इच्छानुरूपसुखं विद्यते यस्याः देवतायाः सा इरावती । धेनुमती 'धिनु पुष्टौ' इति धातोः धेनुत्वं पोषकत्वं 'भावप्रधानो निर्देशः' तदस्याः अस्तीति धेनुमती । सूयवसिनी शोभनतृणोपलक्षिताभीष्टफलाधारा असि । अतः मनुषे मन्यसे चेत् । 'तदेव सारं वद मन्यसे चेत्' इतिवत् । भूतं प्रभूताभीष्टफलम् । दशस्या देहि । 'दाशृ दाने' लोटि रूपमिदम् । स्त्रीलिङ्गत्वं तु देवताशब्दोद्देशनिमित्तम् । यद्वा भगवतः स्त्रीरूपस्यापि औचित्यसूचनार्थम् । उक्तं च ''स्त्रीरूपश्चैव पुंरूपो भगवान्न न पुंसकः'' इति । ननु तवाभीष्टं ममासुलभं स्यात् अत आह ॥ व्यस्तभ्ना इति ॥ हे विष्णो त्वं एते प्रसिद्धे । रोदसी द्यावापृथिव्यौ । व्यस्तभ्नाः अस्तम्भयः । स्तम्भवत् स्तम्भकत्वेऽपि अभीष्टदानसामर्थ्यं कुतः इत्यत आह ॥ **दाधर्थेति** ॥ त्वं पृथिवीं पृथिव्युपलक्षितसर्वभूतानि । अभितः सर्वैः । मयूखैः किरणस्थानापन्नैः अवतारैः । दाधर्थ पोषितवानसि । 'डु धाञ् धारणपोषणयोः' इति धातोः । सर्वभूतानां अभीष्टदानेन पोषणसामर्थ्ये तदन्तरस्थस्य एकस्य मम अभीष्टदाने कथं सामर्थ्यं नास्तीति भावः । पार्थिवाभीष्टदानेऽस्तु सामर्थ्यं पारलौकिकप्रार्थने कथमित्यत उक्तं ॥ **रोदसीति** ॥ तेन तदपि सामर्थ्यं सूचितमिति भावः । पूर्वमन्त्रे पृथिवीधानस्य उक्तावपि न पुनरुक्तिः । दधातेः एकत्र धारणार्थकत्वेन अन्यत्र पोषणार्थकत्वेन भिन्नत्वात् ॥३॥

ऐश्वर्यस्य दातृत्वस्य च सत्त्वे एव दानसम्भवः। अतस्तदर्थवत्रामभेदेन द्विरुपं भगवन्तं स्तुवन्

**''सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वं एष वोऽस्त्विष्टकामधुक्''** ॥ **इति गीतोक्तेः**

इष्टफलदोग्धृयज्ञसिद्ध्यर्थं तत्साधनभूतदेशकालदेवतोत्पादकत्वात् तत्प्रतिबन्धकमहाविघ्नपरिहारसामर्थ्यं च वर्णयति ॥ **उरुमिति** ॥

**ॐ उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम्। दासस्य चिद् वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॐ ॥४॥**

उत्तरमन्त्रस्थेन्द्राविष्णू अपकृष्य अत्र कर्तृत्वेन योज्यौ। इन्द्राविष्णू यज्ञाय उ यज्ञार्थमेव। उरुं महान्तं उर्वीनामकं वा लोकम्। चक्रथुः निर्मितवन्तौ। किञ्च सूर्यं प्रातरीज्यदैवतम्। उषसं तद्यजनयोग्यप्रातःकालम्। अग्निं सायमीज्यदैवतं तदुपलक्षिततद्यजनार्हसायङ्कालञ्च। जनयन्ता जनयन्तौ। 'अभूतां' इति शेषः। किञ्च नरौ निर्विकारौ। 'ला परिवर्तने' ततो नपूर्वात्कः। यद्वा अविनाशौ। 'रीङ् क्षये' 'रीष् हिंसायां' वा। ततो डः, 'सुपां सुलुक्' इत्यादिना प्रथमाद्विवचनस्य अच्। इन्द्राविष्णू पृतनाज्येषु युद्धेषु। तस्य तन्नामसु पाठात्। चित् कस्यचित्। दासस्य हिंसकस्य। 'दसु हिंसायां' इति धातोः। वृषशिप्रस्य वृषवत् मूषकवत् शिप्रः सुखी तस्य। 'श्रुकूले मूषके श्रेष्ठे सुकृते वृषभे वृषे' इत्यभिधानात्। शम्बरनामदैत्यस्येत्यर्थः। मायाः मोहकविद्याः। जघ्नथुः जघ्नतुः। तस्य च थः ॥४॥

॥ इन्द्राविष्णू इति ॥

**ॐ इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम्। शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥५॥**

इन्दति परमैश्वर्यं प्राप्नोतीति इन्द्रः । 'इदि परमैश्वर्ये' । इन्दतेः औणादिको र प्रत्ययः । विशेषेण सनोतीति विष्णुः । विपूर्वात् 'शणु दाने' इत्यस्मात् उ प्रत्ययः उपधालोपश्च । स च स चेति ॥ हे इन्द्राविष्णू ॥ ''देवताद्वन्द्वे च'' इति सूत्रात् पूर्वपदे दीर्घता । युवां दृंहिताः समृद्धाः हिंस्यरूपाः वा । शम्बरस्य तन्नामकदैत्यस्य । नवनवतिं च एकोनशतसङ्ख्याकाः । पुरः नगरीः । श्नथिष्टं वधिष्टम् । तस्य वधकर्मसु पाठात् । किञ्च असुरस्य शम्बरदैत्यस्य । अप्रति अतुल्यम् । वर्चिनः सामर्थ्यवतः । साकं मिलितान् । शतं सहस्रं च एकादशशतसङ्ख्याकान् । वीरान् सैनिकान् । हथः घ्नथः हिंसितवन्तौ स्थः । 'हन हिंसागत्योः'इति धातोः ॥५॥

॥ इयं इति ॥

ॐ इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती ।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र
॥६॥

बृहन्ता बृहन्तौ महान्तौ । उरुक्रमा उरुक्रमौ बहुपराक्रमौ । हे इन्द्र हे विष्णो इयं भवद्विषयिणी । बृहती मनीषा बुद्धिः । 'बुद्धिर्मनीषा धिषणा'इत्यभिधानम् । वां युवाम् । तवसा बलेन । तवश्शब्दस्य बलनामसु पाठात् । वर्धयन्ती सती । 'वां' इति पुनरावर्तनीयम् । वां युवयोः । विदथेषु यज्ञेषु । विदथशब्दस्य यज्ञनामसु पाठात् । स्तोमं स्तोत्रम् । ररे अगायत् । 'रै शब्दे' इति धातोः । अतो युवां वृजिनेषु व्यसनेषु । इषः अन्नानि । पिन्वतं विस्तारयतम् । 'अस्मभ्यम्'इति शेषः ॥६॥

॥ वषट् इति ॥

ॐ वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व
शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं
पात स्वस्तिभिः सदा नः ॥७॥

हे वषट् वर्तन्ते षट् ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणि यस्मिन्नित्यसौ वषट् । ''ऐश्वर्याद्याः षट् गुणा नित्यवृत्ता वषट्कारस्यार्थ इत्याह वेदः''इति ऋग्भाष्ये ।

हे विष्णो अहं ते तव । आसः आस्तेऽसौ आसः त्वदीयो भूत्वा इत्यर्थः । आकृणोमि आह्वयामि । तत्तस्मात् । हे शिपिविष्ट शिपिषु पशुषु यज्ञरूपेण अन्तर्विष्टः प्रविष्टः तत्सम्बुद्धौ हे शिपिविष्ट । ''यज्ञो वै विष्णुः पशवः शिपिः यज्ञ एव पशुषु प्रतितिष्ठति'' इति श्रुतेः । मे मया । 'समर्पितम्'इति शेषः । मे मदीयं वा । हव्यं चरुपुरोडाशादिकम् । जुषस्व अङ्गीकुरु । मे मदीयाः । सुष्टुतयः शोभनाः स्तुतयः यासु ताः । गिरः वाचः । त्वा त्वाम् । वर्धन्तु महागुणैः व्यञ्जयन्तु । ''महागुणैर्व्यञ्जयन्ति गिरोऽस्माकमपि प्रभो । आकाशवृद्धिवद्वृद्धिः विष्णोस्स्यात् नैव चान्यथा । न वर्धते नो कनीयान् इति ह्येनं श्रुतिर्जगौ । महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत्'' इति ऋग्भाष्योक्तेः । यूयं नः अस्मान् । स्वस्तिभिः कल्याणैः । सदा पात रक्षत । बहुमानार्थे बहुवचनम् ॥७॥

**॥ नू मर्त इति ॥**

**ॐ नू मर्तो॑ दयते सनि॒ष्यन् यो विष्ण॑व उरुगा॒या॒य॒ दाश॑त् । प्र यः स॒त्राचा॒ मन॑सा॒ यजा॑त ए॒ताव॑न्तं॒ नर्य॑मा॒विवा॑सात् ॐ ॥८॥**

यो मर्तः मनुष्यः । उरुगायाय विष्णवे । तत्प्रीत्यर्थमिति यावत् । नू इदानीम् । दयते ददाति । दयतिरत्र दानार्थः । यः सनिष्यन् दास्यन् अग्रे दास्यतीत्यर्थः । 'षण दाने' इति धातुः । यश्च दाशत् अदात् पूर्वं दत्तवान् इत्यर्थः । 'दाशृ दाने' इति धातुः । ''बहुलं छन्दसि''इति माङ्योगाभावेऽपि अडागमाभावः । यः सत्राचा समीचीनेन । मनसा बुद्ध्या । प्रयजाते प्रकर्षेण यजति । तं एतावन्तं विष्ण्वर्थं त्रिकालदातारं सुमनसा यष्टारं च नर्यं नरसमूहम् । आविवासात् समीपे आवासयत् ॥८॥

॥ त्वं विष्णविति ॥

**ॐ त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः। पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः ॥९॥**

हे विष्णो । हे एवयावः एवं याति जानातीति एवया रमा सर्वज्ञत्वात् सा अस्य अस्तीति एवयावान् तत्सम्बुद्धौ एवयाव इति । ''मतुबसोरुः सम्बुद्धौ छन्दसि'' इति रुत्वम् । त्वं सुमतिं सुष्ठु मननीयाम् । यद्वा सुष्ठु मतिर्ज्ञानं यस्य तादृशं ब्रह्माणं प्रति । विश्वजन्यां विश्वं सर्वमिष्टफलं जगद्वा जन्यं उत्पाद्यं यस्याः तां सर्वोत्पादकामित्यर्थः । अप्रयुतां प्रकर्षेण युता प्रयुता न प्रयुता यस्याः सकाशादित्यप्रयुता तां सर्वोत्कृष्टामित्यर्थः । मतिं बुद्धिम् । यथा दाः अदाः दत्तवानसीत्यर्थः । तथा नोऽस्मभ्यम् । सुवितस्य सुव्ययस्य । छान्दसत्वात् वीशब्दे ह्रस्वता । भूरेः बहोः । अश्वावतः अश्वोपलक्षितगजादिमतः । पुरुश्चन्द्रस्य पुरूणां बहूनां आह्लादकस्य । रायः धनस्य । द्वितीयार्थे षष्ठी धनमिति यावत् । पर्चः सम्पर्कय देहि इति यावत् । 'पृच् सम्पर्के' ॥ ९॥

॥ त्रिर्देव इति ॥

**ॐ त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा । प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम ॐ ॥१०॥**

देवः विश्वसर्जनादिक्रीडायुक्तः । एतां पृथिवीम् । त्रिः त्रेधा । विचक्रमे आक्रान्तवान् । एषः महित्वा भगवन्महिमा । शतर्चसं ''शतं अनन्तं भवति''इति निरुक्तेः अनन्तर्क्प्रतिपाद्योऽस्ति । किञ्च विष्णुः तवसः देशकालपरिच्छिन्नात् सूर्यादेस्तेजसः । तवीयान् प्रास्तु अतिशयिततेजोरूपो भवति । छान्दसत्वाल्लडर्थे लोट् । अत एव स्थविरस्य अनादिकालीनस्य अस्य

विष्णोः । नाम त्रिविक्रमेत्यभिधानम् । त्वेषं दीप्तं प्रसिद्धमिति यावत् । अथवा त्वेषमिति नाम 'अभूत्' इति शेषः । असाधारण्येन हि व्यपदेशा भवन्तीत्यर्थः ॥१०॥

॥ **विचक्रम इति** ॥

**ॐ वि च॑क्रमे पृथि॒वीमे॒ष ए॒तां क्षेत्रा॑य॒ विष्णु॒र्मनु॑षे दश॒स्यन् । ध्रु॒वासो॑ अस्य की॒रयो॒ जना॑स उरुक्षि॒तिं सु॒जनि॑मा चकार ॐ ॥११॥**

एष विष्णुः । मनुषे मनुष्यजात्याक्रान्ताय । क्षेत्राय निवासार्थम् । एतां पृथिवीम् । दशस्यन् ददानः सन् । विचक्रमे । ननु मनुष्येभ्यो निवासाय भूदाने किंकारणं इत्यत आह ॥ **ध्रुवास इति** ॥ जनासः मनुष्याः । अस्य विष्णोः । कीरयः कर्मकर्तारः दासा इति यावत् । ध्रुवासः निश्चिताः । ननु देवानामपि दासत्वेन तेषां निवासस्थानं किंकल्पितवान् इत्यत आह ॥ **उरुक्षितिमिति** ॥ उरूणां मनुष्योत्कृष्टानां देवानां क्षितिं निवासस्थानम् । सुजनिम शुक्रशोणितसम्वन्धराहित्येन शोभनं जनिम अवतारो यस्य तादृशं स्वरूपम् । चकार ॥११॥

॥ **प्रतदिति** ॥

**ॐ प्र तत् ते॑ अ॒द्य शि॑पिविष्ट॒ नामा॒ऽर्यः शं॑सामि व॒युना॑नि वि॒द्वान् । तं त्वा॑ गृणामि त॒वस॒मत॑व्यान् क्षय॑न्तम॒स्य रज॑सः परा॒के ॐ ॥१२॥**

हे शिपिविष्ट विष्णो । ते तव । तत् वेदप्रसिद्धं नाम । अद्य इदानीम् । प्रशंसामि 'शिष्येभ्यः' इति शेषः । शिष्याभावे च यस्त्वं अर्यः स्वामी । वयुनानि अस्य अन्यस्य अपरस्य सर्वज्ञानानि । विद्वान् जानंश्चासि । तं तवसं बलरूपम् । अतव्यान् असमर्थनीयान् अत्वदीयान् वा । क्षयन्तं नाशयन्तम् । रजसः मलरूपस्य तमसः । पराके दूरे स्थितम् । त्वा त्वाम् । गृणामि स्तौमि ॥१२॥

॥ किमिदिति ॥

**ॐ किमित् ते विष्णो परिचक्ष्यं भूत् प्र यद् ववक्षे शिपिविष्टो अस्मि । मा वर्पो अस्मदप गूह एतद् यदन्यरूपः समिथे बभूथ ॐ ॥१३॥**

हे विष्णो ते तव । इत् इत्थम् । परिचक्ष्यं प्रख्यापनीयं परीक्ष्यमिति यावत् । किं भूत् अभूत् । यत् यस्मात् । त्वं अहं शिपिविष्टः पशुप्रविष्टोऽस्मि इति प्रववक्षे प्रवदसि । त्वं तदेतद्वर्पः स्वरूपम् । वर्पश्शब्दस्य रूपनामसु पाठात् । अस्मत् अस्माकम् । मा अपगूहः मा आच्छादय । तदेतत्किमित्यत आह ॥ यदिति ॥ यत् यस्माद्रूपात् अन्यरूपः । समिथे युद्धे । त्वं बभूथ अभवः ॥१३॥

॥ वषट् इति ॥

**ॐ वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॐ ॥१४॥**

मन्त्रस्तु व्याख्यात एव । अभ्यासस्तु अस्य वर्गद्वयात्मकसूक्तस्य शिपिविष्टनामकविष्णुपरत्वसूचनार्थः ॥१४॥

॥ इति विष्णुसूक्तव्याख्यानम् ॥३१॥

## ३२. विश्वकर्मसूक्तमन्त्रः

अथ चतुर्दशार्चो विश्वकर्माख्यविष्णुसूक्तमन्त्रः ॥ **य इमेति** ॥

**ॐ य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॐ ॥१॥**

यः ऋषिर्ज्ञानी । 'ऋष ज्ञाने' इति धातोः । विश्वकर्मनामा भगवान् होता सन् । इमा इमानि । विश्वा विश्वानि सर्वाणि । भुवनानि तदुपलक्षितसर्वजगन्ति । जुह्वत् अजुहोत् । प्रथमच्छत् प्रथमं छादयति इति स तथा मुख्याच्छादक इत्यर्थः । अन्तर्णीतण्यर्थात् 'छद आवरणे' इत्यस्मात्क्विप् । यद्वा प्रथमपूज्यः छन्दतिशब्दस्य अर्चाकर्मसु पाठात् । सः विश्वकर्मा । नः पिता उत्पादकः सन् । यद्वा लुप्तोपमेयम् । पितेवेत्यर्थः । आशिषा स्वसेवाजन्यतोषदत्ताशीर्वादेन । द्रविणं बलं धनं वा । तन्नामसु पाठात् । इच्छमानः कामयमानः । न्यसीदत् निषण्णोऽभूत् । 'यदा' इति शेषः । तदा अवरान् स्वावरान् ब्रह्मादीन् । 'निर्माय' इति शेषः । आविवेश अन्तःप्रविवेश । इदं तृतीयस्कन्धे स्पष्टमुक्तम् ॥१॥

॥ **किं स्विदिति** ॥

**ॐ किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत् । यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॐ ॥२॥**

यतः येन साधनेन । विश्वकर्मा विश्वा सर्वाणि कर्माणि यस्य । अथवा विश्वं जगत् करोति उत्पादयतीति विश्वकर्मा । 'डु कृञ् करणे' इत्यस्मात् औणादिको मन् प्रत्ययः । तथारूपो भगवान् द्यां भूमिञ्च । जनयन् जनयिता सन् । विशेषेण बभूव । येन महिना महिम्ना । विश्वचक्षाः विश्वं सर्वं चक्षते पश्यतीति तथा हरिः । और्णोत् आच्छादितवान् । 'ऊर्ण आच्छादने' इति धातोः । तत् अधिष्ठानं स्वित् च किमासीत् । आरम्भणं स्वित् आरभ्यते उत्पाद्यते अनेनेति आरम्भणं

उत्पादनकारणञ्च । कतमत् किमासीत् । कथा कथञ्च रूपमासीत् । अत्र किंशब्दः आक्षेपे । न किमपि स्वतन्त्रमित्यर्थः । न प्रश्नार्थे । उत्तराभावात् ॥२॥

ननु एकतः चक्षुष्मतः सर्वदर्शनं युगपत् कथं सम्भवेदित्यत आह ॥ **विश्वतश्चक्षुरिति ॥**

**ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॐ ॥३॥**

सर्वतश्चक्षुष्मानित्यर्थः । एकमुखस्य सर्वतः चक्षुष्मत्त्वमपि कथं इत्यत उक्तम् । विश्वतोमुख उतेति । सर्वतो मुखोऽपीत्यर्थः । शेषं विना सर्वेषां मुखाद्बाह्वाधिक्यदर्शनात् कथं द्विबाहोः अनेकमुखत्वमत उक्तम् । विश्वतो बाहुरिति । उत शब्दश्चार्थे । न केवलं बाहूनामेव अनेकत्वं किं तु पादानां अपि इत्याह ॥ **विश्वतस्पादिति** ॥ पादशब्दस्य ''सङ्ख्यासुपूर्वस्य''इति अलोपः । तादृशो विश्वकर्माख्यः एको मुख्यः अद्वितीयो वा देवो विष्णुः । द्यावाभूमी जनयन् सन् । सं स्वाभिन्नाभ्यां 'समभेदे समीचीने' इति यादवकोशात् । बाहुभ्यां प्रधानाभ्यां भुजाभ्याम् । सं पतत्रैः समीचीनान् यतमानान् त्रायन्ति ते तथा तैः, पक्षसदृशैरितरबाहुभिर्वा । संधमति अग्न्यादिभूतानि संयोजयति । यद्वा बाहुभ्यां मोदप्रमोदाख्यप्रद्युम्नानिरुद्धाभ्यां धमति गच्छति प्रविशतीति यावत् । 'मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः' इति श्रुतेः । उतवा बाहुभ्यां बाधकाभ्यां कालसङ्कर्षणरूपाभ्याम् । 'बाधृ विलोडने' धमति संहरति । धमतिशब्दस्य वधकर्मसु पाठात् ॥३॥

॥ **किं स्विदिति** ॥

**ॐ किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद्भुवनानि धारयन् ॐ ॥४॥**

विश्वकर्माख्यो भगवान् भुवनानि धारयन् सन् यत् अध्यतिष्ठत् अधिष्ठितवान् । तद्वनं किमास । उ स्वित् अथवा । सः वृक्षः । कः आस न कोऽपीत्यर्थः । तत्र हेतुमाह । यतः द्यावापृथिवी निष्टतक्षुः निराकुर्वन् । 'ज्ञानिनः' इति शेषः । ज्ञानिभिर्द्यावापृथिव्योः निराकरणे कृते का कथा वनवृक्षयोरिति भावः । इत् इत्थं मनसा विचारेण मनीषिणः ज्ञानवन्तोऽपि । तदु तमेव । पृच्छत अपृच्छन् । स्वज्ञानस्य । 'याथार्थ्यज्ञानाय' इति शेषः । यद्वा तत् अधिष्ठितं पदं किं वनमास । उस्वित् सा तत् कः किं वृक्ष आस । इत् इत्थम् । मनीषिणः प्राज्ञाः । यतो यज्ज्ञानार्थं द्यावापृथिवी तदन्तरालम् । मनसा निष्टतक्षुः व्यचिन्वन् । तथापि 'नाद्धा' इति शेषः । तदु तमेव । पृच्छतेति ॥ ४॥

प्रश्नमेवाह ॥ या त इति ॥

**ॐ या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा । शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वँ वृधानः ॐ ॥५॥**

हे विश्वकर्मन्, ते तव । परमाणि धामानि स्थानानि । या यानि कानीत्यर्थः । अत्रत्यानां सर्वयच्छब्दानां किंशब्दार्थकत्वं बोध्यम् । अवमानि अधमानि । या कानि । मध्या मध्यमानि । या कानि । उत शब्दश्चार्थे । हे स्वधावः । स्वधा सुखं विद्यते अस्येति स्वधावान् तत्सम्बुद्धौ स्वधावः । 'मतुब्वसोरुः सम्बुद्धौ छन्दसि' इति रुत्वम् । सुखपूर्णेत्यर्थः । त्वं हविषि हविर्दाने । सखिभ्यः मित्रवदाचरद्भ्यः । नः इमा इमानि धामानि । शिक्षय शंस इति यावत् । न केवलं शंस अपि तु स्वयं वृधानः स्वतः पूर्णस्त्वम् । तेषु तन्वं स्वात्मानम् । यजस्व याजयस्व पूजय । 'अस्माभिः' इति शेषः । अन्तर्णिच् । त्वदनुग्रहं विना त्वत्पूजने न अस्माकं शक्तिरिति भावः । ''न ऋते त्वत्क्रियते किञ्चनारे महामर्क मघवञ्चित्रमर्च'' इति श्रुतेः ॥५॥

॥ विश्वकर्मन्निति ॥

**ॐ विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॐ ॥६॥**

हे विश्वकर्मन् विष्णो । हविषा अस्मत्कृतपूजया । [1] वावृधानः तुष्टः । स्वयं स्वतन्त्रः त्वम् । पृथिवीं तदुपलक्षितपार्थिवजनान् मनुष्यादीन् । उतशब्दश्चार्थे । द्यां तदुपलक्षितदिवौकसः देवादीन् । यजस्व फलदानेन अनुकम्पय । अन्ये एतज्ज्ञानविरुद्धज्ञानवन्तः । जनासः जनाः । असुरांशा लोकाः । अभितः सर्वथा । मुह्यन्ति । तव सर्वोत्तमत्वं कदापि न जानन्तीत्यर्थः । इह अस्मिन् तत्त्वज्ञाने सूरिः सर्वज्ञः । मघवा पूज्यः । मह पूजायां हस्य च घः । उगागमश्चेति । तादृशो विष्णुः अस्माकमस्तु अस्मदनुकूलो भवत्वित्यर्थः ॥६॥

॥ वाचस्पतिमिति ॥

**ॐ वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम । स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ॐ ॥७॥**

अद्य इदानीम् । वाचस्पतिं सर्ववाङ्नियामकम् । ऊतये स्वभक्तरक्षणाय । मनोजुवं मनसोऽपि अधिकं जवति गच्छतीति मनोजूः तम् । 'मनसो जवीयः' इति श्रुतेः । जवतिशब्दस्य गतिकर्मसु पाठात् । 'जु गतौ' इति धातोश्च । विश्वकर्माणं विष्णुम् । वाजे अन्नविषये । अन्नलाभार्थमिति यावत् । वाजशब्दस्य अन्ननामसु पाठात् । हुवेम आव्हयामः । सः विश्वशम्भुः विश्वस्य सर्वस्य भक्तजातस्य । शं सुखं भावयति उत्पादयति इति स तथा । अन्तर्णिच् । साधुकर्मा साधु निर्दोषं कर्म यस्य स विष्णुः । नः अवसे पालनाय अन्नलाभाय

१. 'वावृधानः वृद्धिं प्राप्तः इव अस्मासु कृपया स्वयं प्रीतःसन्' इति मध्वमन्त्ररत्नाकरे ।

वा । अवश्शब्दस्य अन्ननामसु पाठात् । विश्वा सर्वाणि हवनानि आह्वानानि जोषत् सेवतु । श्रवणेन अङ्गीकरोत्वित्यर्थः । 'जुषु सेवायाम्' इति हि धातुः ॥७॥

॥ इति विश्वकर्मसूक्ते प्रथमवर्गव्याख्यानम् ॥१॥

॥ चक्षुष इति ॥

**ॐ चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने । यदेदन्ता अददृहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् ॐ ॥८॥**

धीरः ज्ञानानन्दरूपो भगवान् । हि यस्मात् । घृतं 'घृ क्षरणदीप्त्योः' इति धातोः दीप्तं स्वकीयस्वरूपम् । नम्नमाने अतिशयेन प्रह्वीभूते । एने चक्षुर्मनसी । अजनत् जनयामास । अतः मनसा अन्तःकरणेन तदभिमानिचन्द्रेण वा सहितस्य । चक्षुषः चक्षुरिन्द्रियस्य तदभिमानिसूर्यस्य वा । पिता उत्पादक इति । 'प्रसिद्धः' इति शेषः । आत् इत् अस्मात् विष्णोरेव । द्यावापृथिवी अप्रथेतां विस्तृते अभूताम् । इत् इत्थम् । यदा अन्ता निर्णयाः सन्ति । तदा पूर्वे पूर्वपक्षाः। अददृहन्त नष्टा बभूवुः । यद्वा यदा आदित् अस्मादेव । पूर्वे प्राचीनाः । अन्ताः प्रलयतमोगुणादयः । अददृहन्त ननशुः । तदा द्यावापृथिवी अप्रथेताम् । सृष्टिसंहारकर्तृत्वं भगवदेकनिष्ठमिति भावः । अथवा यदा इत् इत्थं तत्त्वसृष्टिः । तदा आदित् विष्णोरेव । पूर्वे ब्रह्मादयः । अन्ताः तृणान्ताश्च । अददृहन्त ववृधुः । 'दृह दृहि वृद्धौ' इति धातोः ॥८॥

॥ विश्वकर्मेति ॥

**ॐ विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् । तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ॐ ॥९॥**

विश्वकर्मा सर्वकर्ता । परः परमात्मा । यतः मनस्स्रष्टा, आत् अस्मात्कारणात् । विमनाः विशिष्टज्ञानः । यतश्चैतत्स्वरूपं चन्द्रसूर्यौ प्रह्वीभूतौ । आत् विहायाः महान् । तच्छब्दस्य महन्नामसु पाठात् । यतश्च भूमिजनकः । आत् धाता सर्वधारकः । 'डुधाञ् धारणपोषणयोः' इति धातोः । यतश्च द्योजनकः । आत् विधाता विशेषात्पोषकः । यतः सूर्यजनकः । आत् परमा संदृक् महानिर्दोषदृष्टिः । यद्वा एवं सिद्धान्तविषयः यतः आत् परमा उत्कृष्टप्रमाणरूपः । यतश्च सूर्यजनकः आत् संदृक् सम्यक् द्रष्टा । 'आसीत्' इति शेषः । यत्र भगवति । एकं केवलम् । सं समर्पितेन । इषा अन्नादिना । तेषां इष्टानि मदन्ति भवन्ति । 'अनेकार्था हि धातवः' इत्युक्तेः । तेषां केषामित्यत आह ॥ तच्छब्दबलाद्यच्छब्दोऽध्याहर्तव्यः । यान् सप्तर्षीन् आहुः । 'ज्ञानिनः' इति शेषः ॥९॥

**॥ यो न इति ॥**

**ॐ यो नः॑ पि॒ता ज॑नि॒ता यो वि॑धा॒ता धामा॑नि॒ वेद॒ भुव॑नानि॒ विश्वा॑ । यो दे॒वानां॑ नाम॒धा एक॑ ए॒व तं स॑म्प्र॒श्नं भु॒वना यन्त्य॒न्या ॐ ॥१०॥**

यः नः अस्माकं । पिता न दत्तपुत्रपितृवत्पिता किन्तु जनिता जनकः । यश्च विधाता विशेषेण पोषकः । 'नः' इति सर्वत्र सम्बध्यते । यश्च विश्वा सर्वाणि । भुवनानि सत्यलोकादीनि तदन्तर्गतधामानि च । वेद ज्ञातवान् लेभे वा । 'विद ज्ञाने' 'विदॢ लाभे' च । अथवा अन्तर्णीतण्यर्थोऽयं वेदयामास प्रापयामास । देवादिभ्यः यथायोग्यं पदानि ददौ इत्यर्थः । यश्च देवानां नामधाः नामधारकः । सकलदेवतानाम्नां परममुख्यवृत्त्या वाच्यः एक एव । तं सम्प्रश्नं सम्यक् प्रश्नो यस्य तं विचारविषयं इत्यर्थः । 'कृत्वा' इति शेषः । अन्या सत्यलोकाद्यतिरिक्तानि भुवनानि वैकुण्ठादीनि । यन्ति प्राप्नुवन्ति । 'अधिकारिणः' इति शेषः ॥१०॥

॥ त इति ॥

**ॐ त आयजन्त द्रविणं सर्मस्मा ऋषयः पूर्वे जरितारो न भूना । असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॐ ॥११॥**

ये सूर्ते सूरयति ज्ञापयति ज्ञानं जनयतीति यावत् तत्सूर्त सत्त्वगुणः तस्मिन् । 'सत्त्वात्सञ्जायते ज्ञानम्' इति गीतोक्तेः । असूर्ते तद्विरुद्धे तमोगुणे । रजसि रजोगुणे च । निषत्ते सत्तारहिते सति । त्रिगुणात्मिकायां जडप्रकृतौ अस्वतन्त्राया-मित्यर्थः । भूना विष्णुना । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इत्यभिधानात् । सम्प्रेरिताः सन्तः इमानि प्रत्यक्षसिद्धानि भूतानि । अकृण्वन् जनयामासुः । ते ऋषयः ज्ञानिनः । 'ऋष ज्ञाने' इति धातोः । पूर्वे प्राञ्चो ब्रह्माद्याः । जरितारः न स्तोतारः । जरितृशब्दस्य स्तोतृनामसु पाठात् । हरिगुणानामानन्त्यात् साकल्येन वर्णनाशक्तेः इवार्थकनपदप्रयोगः । अस्मै हरये हरिप्रीत्यर्थमिति यावत् । सं शुद्धम् । द्रविणं घृतादिद्रव्यम् । आ भक्त्याद्यतिशयेन । अयजन्त अजुहवुः । यद्यपि वेदे अग्न्याद्युद्देशेन याग उक्तः । तथापि विष्णोरेव मुख्यतः सर्वदेवनाम-धारकत्वात् तथानुसन्धानेन यजने वैष्णवो यज्ञो भवतीति ज्ञापयितुं अस्मै एव अजुहवुः । अतः पूर्वानुरोधादुत्तरैरपि एवमेव होतव्यमिति भावः ॥११॥

॥ पर इति ॥

**ॐ परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति । कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ॥१२॥**

अत्र सर्वतृतीयाः पञ्चम्यर्थे । दिवा दिवः परः । एना एतस्याः । पृथिव्या पृथिव्याः परः । देवेभिः देवेभ्यः परः । असुरैः असुरेभ्यश्च यः परोऽस्ति । स आपः आसमन्तात् पालको विष्णुः । 'आप आपालनाद्विष्णुः' इत्युक्तेः । यद्वा 'सप्तसु प्रथमा' इति सूत्रात् आपः अप्सु इत्यर्थः । अप्राकृतोदकाभिमानिरमायां इत्याशयः । प्रथमं आदौ । कं उदकरूपम् । तच्छब्दस्य उदकनामसु पाठात् । गर्भं

दध्रे धृतवान्। 'आपो वै नरसूनवः' इत्युक्तेः। यत्र उदके। स्वित् च। सं विष्णुम्। विश्वे सर्वे देवा अपश्यन्त ॥१२॥

तत्कथमत्राह ॥ तमिति ॥

**ॐ तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॐ ॥१३॥**

आपः जलं। प्रथमं सर्वाद्यम्। तमित् तमेव विष्णुं गर्भं दध्रे। 'जलशायी विश्वरूपः' इत्युक्तेः। यत्र विष्णौ। विश्वे देवाः। समगच्छन्त सम्प्राप्ताः। 'उत्पत्तुं' इति शेषः। यत्रेत्यावर्तनीयम्। यत्र जले। अजस्य गतस्य हरेः। 'अज गतिक्षेपणयोः' इति धातोः। नाभौ एकं पद्मं अध्यर्पितं अधिष्ठितम्। यस्मिन् पद्मे। विश्वानि सर्वाणि भुवनानि तस्थुः ॥१३॥

॥ न तमिति ॥

**ॐ न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चाऽसुतृप उक्थशासश्चरन्ति ॐ ॥१४॥**

यः हरिः। इमा इमानि भूतानि भुवनानि वा। जजान अजनयत्। यश्च युष्माकं अन्यत् भिन्नः। अन्तः अन्तःस्थः बभूव। तं यूयं न विदाथ न जानीथ। तत्र हेतुमाह। नीहारेण इति ॥ ये असुतृपः स्वप्राणतर्पकाः। यद्वा सुं सुखरूपं विष्णुं तर्पयन्ति प्रीणयन्तीति सुतृपो वैष्णवाः तद्विरुद्धा असुतृपः। उक्थशासश्च। वयं शास्त्रशंसितार इत्यभिमानवन्तः। चरन्ति उपदिशंति। तेषां जल्प्या वचनरूपेण। नीहारेण अवश्यायेन अज्ञानस्थानीयेन। 'अवश्यायस्तु नीहारः' इत्यमरः। प्रावृताः आच्छादितज्ञानाः यूयं स्थ। अतो न जानीथ इत्यर्थः। इति मन्त्रद्रष्टुः स्वशिष्यान्प्रत्युक्तिः ॥१४॥

॥ इति विश्वकर्माख्यविष्णुसूक्तमन्त्रव्याख्यानं समाप्तम् ॥३२॥

## ३३.अम्भृणीमन्त्रव्याख्यानम्

इतः परं मुख्यत्वेन विष्णोरेव सर्वे मन्त्राः 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः । 'सर्वशब्दाभिधेयोऽसौ' इति स्मृतेश्च । अवान्तरत्वेन रमादीनाम् । तत्र 'अहं रुद्रेभिः' इत्यष्टर्चसूक्तस्य मुख्यत्वेन विष्णुमुनिकत्वात् तद्वाक्यत्वम् । तत्र प्रथमा ऋक् ॥ **अहं रुद्रेभिरिति ॥**

**ॐ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॐ ॥१॥**

अहं रुद्रेभिः एकादशरुद्रैः । वसुभिः अष्टवसुभिश्च । 'परिवृतः' इति शेषः । चरामि सञ्चरामि । अहं आदित्यैः द्वादशादित्यैः । उत तथा । विश्वदेवैः त्रयोदशविश्वेदेवैः चरामि । अहं इत्यस्य पुनःपुनस्त्वं स्वस्य सर्वोत्तमत्वख्यापनार्थम् । अहं उभा उभौ । मित्रावरुणा मित्रावरुणौ । बिभर्मि धारयामि पोषयामि वा । अहं इन्द्राग्नी बिभर्मि । अहं उभा उभौ । अश्विना अश्विनौ । बिभर्मि । रमापक्षे 'परिवृता' इति शेषः । स्वस्य विष्णुं विना सर्वोत्तमत्वख्यापनार्थं अहमित्यस्य पौनःपुन्यं इति विशेषः ॥१॥

॥ **अहं सोममिति ॥**

**ॐ अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् । अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते ॐ ॥२॥**

अहं आहनसं यज्ञेष्वभिपूयमानलताभिमानित्वेन इयमुक्तिः । सोमं राजानं जुह्वति तं देवा भक्षयन्ति इत्यादिवत् । सोमं सोमदेवं बिभर्मि । अहं त्वष्टारं तन्नामानं देवम् । उतशब्दश्चार्थे । पूषणं भगं च बिभर्मि । अहं हविष्मते चरुपुरोडाशादिद्रव्यवते । सुन्वते सोमाभिषवणकर्त्रे । सुप्राव्ये सु सुष्ठु प्र प्रकर्षेण

प्रं विष्णुं वा आ अधिकं वेति जानातीति सुप्रावीः तस्मै । 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इति धातोः । गत्यर्थानां ज्ञानार्थत्वाच्च । यजमानाय । यद्वा सुतरां प्रकर्षेण रक्षणयोग्ये यज्ञे । विषयसप्तमीयम् । द्रविणं धनम् । दधामि ददामि रमापक्षेऽपि स एवार्थः ॥२॥

**॥ अहं राष्ट्री इति ॥**

**ॐ अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॐ ॥३॥**

अत्र स्त्रीलिङ्गत्वं रमाया बिम्बरूपत्वान्मोहिन्यादिस्त्रीरूपत्वाद्वा ज्ञेयम् । राष्ट्री राज्ञी । यज्ञियानां यज्ञार्हाणाम् । वसूनां पदार्थानाम् । सङ्गमनी प्रापयित्री । प्रथमा चिकितुषी अनादितः सर्वत्र कृतनिवासा । देवाः तां मा मां । पुरुत्रा पुरुस्थानेषु । व्यदधुः चक्रुः । पूजार्थं प्रतिष्ठापितवन्त इत्यर्थः । भूरिस्थात्रां स्वतो भूरिस्थानेषु । 'देवानाम्' इति शेषः । भूरि आवेशयन्ती बह्वावेशकारयित्री ॥३॥

**॥ मया स इति ॥**

**ॐ मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् । अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॐ ॥४॥**

यः अन्नमत्ति स मयैवात्ति । यः विपश्यति विविधं पश्यति । स मयैव पश्यति । यः प्राणिति चेष्टते । सः, ईशब्द एवार्थकः । मयैव चेष्टते । यः उक्तं श्रुणोति स मया ई मयैव श्रुणोति । ये अमन्तवः निरपराधाः । ते मां उपक्षियन्ति मत्समीपे निवसन्ति । हे श्रुत प्रसिद्ध ब्रह्मन् । त्वं श्रुधि श्रुणु । अहं ते तुभ्यं श्रद्धिवं श्रद्धेयं वचनं वदामि । अन्यत्रापि स एवार्थः ॥४॥

॥ अहमेवेति ॥

ॐ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॐ ॥५॥

अहं स्वयमेव न कस्यचिन्मुखेन इत्यर्थः । देवेभिः देवैः । उत मानुषेभिः मानुषैश्च । जुष्टं सेवितम् । इदं उक्तं वक्ष्यमाणं च वदामि । अहं यं यं उग्रं रुद्रं कर्तुं कामये तं तमुग्रं कृणोमि करोमि । यं ऋजुजीवमध्ये ब्रह्माणं कर्तुं कामये तं ब्रह्माणं कृणोमि । यं ऋषिं कर्तुं कामये तं ऋषिम् । यं सुमेधां सुमेधसं कर्तुं कामये तं सुमेधसं करोमीति । अन्यत्राप्ययमेवार्थः । रमापक्षे रमावाक्यत्वात् ॥५॥

॥ इत्यम्भृणीसूक्ते प्रथमवर्गव्याख्यानम् ॥१॥

॥ अहं रुद्राय इति ॥

ॐ अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॐ ॥६॥

अहं ब्रह्मद्विषे संहारकाले ब्राह्मणादिसर्वप्राणिद्विषे । यद्वा ब्रह्मद्विषे शरवे ब्रह्मद्विषां हन्त्रे रुद्राय । चतुर्थी द्वितीयार्थे । उक्तगुणविशिष्टं रुद्रमित्यर्थः । हन्तवे उ हन्तुं एव । धनुः आतनोमि स्वीकरोमि । अहं जनाय जनम् । समदं कृणोमि मद्युक्तं हर्षयुक्तं वा करोमि । जनाय इति चतुर्थ्या द्वितीयार्थानङ्गीकारे समदमिति क्रियाविशेषणम् । अहं द्यावापृथिवी आविवेश आविष्टोऽस्मि । अन्यत्राप्ययमेवार्थः ॥६॥

॥ अहं सुव इति ॥

ॐ अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्व१न्तः समुद्रे । ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॐ ॥७॥

अहं अस्य जगतः पितरं उत्पादकं हिरण्यगर्भम् । मूर्धन् मूर्धनि सर्वाधिक्ये । सुवे सृजामि । मम योनिः गर्भधारणार्था योनिः । रमादेवी 'विष्णोर्योनि-गर्भसन्धारणार्था महामाया सर्वदुःखैर्विहीना' इति सामवेदे शार्कराक्षश्रुतिः । 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति गीतासु । सा समुद्रेऽन्तः अप्सु 'प्रादुर्भूता' इति शेषः । 'क्षीराब्धितनया रमा' इत्यनुशासनात् । ततः लक्ष्मीपतित्वादेव । अनु इदानीं । विश्वा भुवना सर्वभुवनेषु । वितिष्ठे विशेषेण तिष्ठामि । उत किञ्च । अमुं परोक्षविषयां । द्यां द्युलोकम् । वर्ष्मणा देहेन । उपस्पृशामि व्याप्नोमीत्यर्थः । अन्यत्र मम योनिः प्रसवशक्तिकारणम् । समुद्रे अप्सु अन्तः 'तिष्ठति' इति शेषः । ततः तत्सामर्थ्यादेव । अन्यत्समानम् ॥७॥

**॥ अहमेव वात इति ॥**

**ॐ अ॒हमे॒व वात॑ इ॒व प्र वा॑म्या॒रभ॑माणा॒ भुव॑नानि॒ विश्वा॑ । प॒रो दि॒वा प॒र ए॒ना पृ॒थि॒व्यैताव॑ती महि॒ना सं ब॑भूव ॐ ॥८॥**

अहमेव वात इव वायुरिव । प्रवामि प्रकर्षेण गच्छामि । वायोः अपि अतिवेगवानहमित्यर्थः । अहमेव विश्वा भुवनानि । आरभमाणा निर्माणोद्युक्तास्मि । स्त्रीलिङ्गनिमित्तं तु उक्तमेव । दिवा इत्यादितृतीया पञ्चम्यर्थे । अहं दिवा दिवः परः । एना पृथिव्या एतस्याः पृथिव्याः । परोऽस्मि महिना महिम्ना । एतावती ज्ञान्यधिकारानुसारेण उक्तिः । 'एतावानस्य महिमा' इति श्रुत्यर्थवत् सर्वात्मना कुतो भवतीति शङ्का 'अतो ज्यायांश्च पुरुषः' इति प्रमाणवाक्यशेषेण परिहर्तव्या । यद्वा एना पृथिव्या पर इत्युक्तं, एना केत्याकाङ्क्षायामाह ॥ एतावतीति ॥ या द्यौश्च पृथिवी च महिना एतावती परिमितमाहात्म्येत्यर्थः । सम्बभूव अभूत् । अहं तु अपरिमितमाहात्म्य इति भावः । अन्यत्रोक्तोऽर्थ एव तत्रायं विशेषः । ननु लोके भर्तुः सकाशाद्भार्याया लघुत्वं दृष्टम् । त्वं शरीरेण द्यां स्पृशसि चेत् तव भर्ता कियानित्यत आह । परो दिवा दिवः परः । एतस्याः

पृथिव्याश्च परो 'मद्भर्ता' इति शेषः । अहं तु महिना महत्त्वेन एतावती परिमिता सम्बभूव अभवम् ॥८॥

॥ इत्यम्भृणीमन्त्रव्याख्यानं समाप्तम् ॥३३॥

**३४. एकाक्षरह्रीनामकलक्ष्मीमन्त्रः**

तदीय एव एकाक्षरो मन्त्रः ॥ **ह्रीमिति** ॥

**॥ ॐ ह्रीं ॐ ॥**

विष्णुविषयेऽष्टाक्षरहंसमन्त्रव्याख्यानसमये उक्त एवार्थः । रमाविषये तु हरति भक्तदारिद्र्यादीति । यद्वा ह्रीं लज्जां एति प्राप्नोति हर्यग्र इति । 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया' इति । 'माया परेत्यभिमुखे च विलज्जमाना' इति च भागवते ॥३४॥

**३५. एकाक्षरश्रीनामकलक्ष्मीमन्त्रः**

तस्याः एवापर एकाक्षरो मन्त्रः ॥ **श्रीं इति** ॥

**॥ ॐ श्रीं ॐ ॥**

श्रयते यज्जठरं विश्वमिति । बीजस्वभावान्नुम् । यद्वा श्रियि माति निर्माति सर्वभूतानीति । 'मा निर्माणे' धातुलोपो निरुक्तत्वात् ।

**'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ॥ इति गीतासु ।**

अथवा श्रियं माति जानाति इति । 'मा ज्ञाने' । अन्यत्र श्रयते हरिवक्ष इति । 'विष्णुवक्षस्स्थलालया' इति लक्ष्मीस्तुतौ ॥३५॥

**३६. एकाक्षरभूनामकलक्ष्मीमन्त्रः**

भूरूपिण्यास्तस्या एवेतरः ॥ **भूमिति** ॥

**॥ ॐ भूं ॐ ॥**

भुवं पृथिवीं तदभिमानिनीं भूनाम्नीं रमां वा अवति इति भूम्। 'अव रक्षणे' ततः क्विप्। ज्वरत्वरेत्यूठ्। यद्वा भवतीति भु कार्यरूपं जगत्। तदवतीति भूम्। अन्यत्र भवत्यस्या जगदिति भूम्। अथवा भुवं भूमिं स्वाभिमानित्वेन अवति अवगच्छति इच्छति वा सा भूम्। प्रणवव्याख्याने धातुरुक्तः ॥३६॥

## ३७. पञ्चाक्षरभूनामकलक्ष्मीमन्त्रः

तस्या एव अन्यः पञ्चाक्षरः ॥ **भूमिति** ॥

**॥ ॐ भूं भुवे नमः ॐ ॥**

बीजं तु उक्तार्थमेव। भुवे पूर्णाय स्पूर्त्यात्मने वा नमोऽस्त्वित्यन्वयः। यद्वा भवत्यस्माज्जगदिति भूः ब्रह्मा उः शङ्करः। बीजस्य अव्ययरूपत्वात् तस्य च षष्ठ्यर्थकत्वात् तयोर्भुवे आधारायेति। अन्यत्र भूः विष्णुः 'अनिर्विण्णः स्थविष्ठो भूः' इति सहस्रनामसु पाठात्। उः शङ्करः। मः ब्रह्मा। मः शिवश्चन्द्रमा वेधाः' इत्यभिधानम्। तेषां भुवे अभिव्यक्तिस्थानाय। उक्तञ्च

**'सत्वात्मिकायां स बभूव तस्मात्स विष्णुनाम्नैव निरन्तरोऽपि।**
**रजस्तनौ चैव विरञ्च आसीत् तमस्तनौ शर्व इति त्रयोऽस्मात्' ॥**

इति महाभारततात्पर्यनिर्णये।

अथवा भूमिति बीजस्य जपाद्भवति आविर्भवतीति सा तथा तस्यै नम इति ॥

## ३८. दुर्गानामकलक्ष्मीमन्त्रः

दुर्गारूपिण्यास्तस्या एव अन्य एकाक्षरो मन्त्रः ॥ दुरिति ॥

**॥ ॐ दुः ॐ ॥३८॥**

दुःखयति दैत्यमिति दुः। 'क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इत्यारभ्य 'ततो यान्त्यधमां गतिम्' इत्युक्तेः। यद्वा अधर्मनिषेधकः। 'नो इतराणि' इति श्रुतेः। 'दुर्दुःखे च निषेधे च' इत्यनुशासनम्। अन्यत्र मुख्यत्वेन अयमेवार्थो ज्ञेयः ॥३८॥

**३९. षडक्षरदुर्गानामकलक्ष्मीमन्त्रः**

अथ दुर्गाया अपरः षडक्षरो मन्त्रः ।। **दुरिति** ।।

**।। ॐ दुः दुर्गायै नमः ॐ ।।**

दुः दुखं न गच्छतीति दुः दुर्गा तस्यै । स्त्रीरूपत्वात् स्त्रीलिङ्गत्वम् । 'स्त्रीरूपश्चैव पुंरूपः' इत्याद्युक्तेः । 'कुतो दुखं स्वतन्त्रस्य नित्यानन्दैकरूपिणः' इत्युक्तेश्च । यद्वा दुः इति बीजवाच्याया दुर्गारूपिण्या रमाया अपि दुर्गायाः साकल्येनावगन्तुं अशक्यायै । उक्तञ्च । 'यथा हरिः स्वमात्मानं वेद तद्वद्रमापि न' इति । अन्यत्र दुः दुखं दुर्गायै अप्राप्तवत्यै नम इति । 'नित्यादुःखा रमा' इति तत्त्वसङ्ख्याने । यद्वा दुः दुष्टानां दुर्गायै अगम्यायै इति ।।३९।।

**४०. वैदिकदुर्गामन्त्रः**

अथ तदीयो वैदिको मन्त्रः ।। **जातवेदस इति** ।। वयं जातवेदसे जातं वेदो धनं यस्मात् तस्मै । वेदशब्दस्य धननामसु पाठात् । यद्वा जाता वेदा यदर्थमिति ।

**ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॐ ।।**

उक्तञ्च भारते 'जाताः वेदा यदर्थं हि जातवेदास्ततो ह्यसि' इति । तस्मै अग्न्यन्तस्स्थपरशुरामाय । सोमं तन्नामकं हविः । सुनवाम अभिषवणं कुर्मः । यतः वेदः वेदयतीति वेदः । अथवा वेदः प्रतिपादकत्वेन अस्य अस्तीति स तथा । ''अर्श आद्यच्'' । अरातीयतः शत्रुभूतान् । निदहाति नितरां दहति । य एवम्भूतः सोऽग्निः । अगं स्वतो गन्तुं अशक्यं विश्वं नयति प्रवर्तयतीति स तथा । 'नीञ् प्रापणे' उपपदान्तलोपो निरुक्तत्वात् । अङ्गानि नयतीत्यग्निरिति वा । 'अग्निरङ्गप्रणेतृतः' इति ब्रह्माण्डे । तन्नामा हरिः । नः अस्मान् । अतिदुर्गाणि

अत्यन्तं दुरत्ययानि । विश्वा सर्वाणि । दुरिता दुरितानि पापानि । नावा सिन्धुमिव अतिपर्षत् अतिपारयेत् । अन्यत्र योऽग्निर्नोऽतिदुर्गाणि विश्वानि दुरितानि नावा सिन्धुमिव अतिपारयेत् तस्मै जातवेदसे सोमं सुनवाम । तत्र शत्रूयतः विघ्नकरान् यो निदहाति स वेदः । वेदाभिमानिनी दुर्गा । 'श्रीभूदुर्गेति या भिन्ना' इत्यारभ्य 'सैव तु श्रुतिरूपिणी' इति तन्त्रभागवते ॥४०॥

## ४१. हिरण्यगर्भसूक्तमन्त्रः

अथ ब्रह्मणः पञ्चदशर्चो वैदिको मन्त्रः ॥ **हिरण्यगर्भ इति** ॥

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॐ ॥ १॥**

अत्र जातशब्दः सत्प्रथमार्थे । भगवान् अग्रे सृष्टेः पूर्वं प्रलय इति यावत् । हिरण्यगर्भः हिरण्यं ब्रह्माण्डं गर्भे यस्य स तथा । जातः सन् समवर्तत आसीत् । यद्वा अग्रे सृष्टौ । हिरण्यस्य ब्रह्माण्डस्य गर्भोऽन्तर्यामी जातः सन् समवर्तत । अथवा जातः जायते तज्जं जगत् तत् अततीति जातः,'अत सातत्यगमने' जायमानव्यापक इत्यर्थः । स एक एव भूतस्य उत्पन्नजगतः । पतिः पालक आसीत् । एको मुख्य इति वा । 'एके मुख्यान्यकेवलाः' इत्यभिधानम् । ब्रह्मरुद्रेन्द्रादीनां पालकत्वेऽपि तेषां अमुख्यत्वेन पालकत्वमिति भावः । भूतस्योदकस्याग्रे उपरीति वा । भूतशब्दस्योदकनामसु पाठात् । कथं तस्यैव पालकत्वं निश्चितमित्यत आह ॥ **स इति** ॥ स विष्णुः । इमां प्रत्यक्षसिद्धाम् । पृथिवीं द्यामुत दिवं च । दाधार दधार । अतः देवाय विश्वसर्जनादिरूपक्रीडायुक्ताय । कस्मै काय 'प्रीतिः सुखं कमानन्दः' इत्यभिधानात् सुखरूपाय । अत्र भगवद्वाचकस्य कशब्दस्य सर्वनामसंज्ञाभावेऽपि 'सर्वे विधयश्छन्दसि बहुलं भवन्ति'इति असर्वनाम्नोऽपि ङे इत्यस्य स्मै इत्यादेशः । हविषा उपासनालक्षण-हविर्दानेन विधेम स्वानुकूलीकुर्मः । ब्रह्मपक्षे हिरण्यगर्भो ब्रह्मा । 'हिरण्यगर्भो

लोकेशः स्वयम्भूश्चतुराननः' इत्यभिधानात् । अग्रे प्रथमं विष्णोः सकाशादिति शेषः । जातः महत्तत्वादिरूपदेहयोगलक्षणजन्म प्राप्तः सन् । समवर्तत आसीत् । यस्य भूतस्य जातस्य ब्रह्मणः । स एकः अद्वितीयः । पतिः स्वामी आसीत् । सः क इत्यत आह ॥ दाधारेति ॥ य इमां पृथिवीं द्यामुत दाधार । 'पृथिवीमुत द्यामेको दाधार' इति विष्णुश्रुतेः । 'हिरण्यगर्भः कः प्रोक्तः' इत्युक्तेः । अन्यत्समानम् ॥१॥

॥ य आत्मदेति ॥

ॐ य आ॒त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते
प्र॒शिषं॒ यस्य॑ दे॒वाः । यस्य॑ छा॒यामृ॒तं॒ यस्य॑ मृ॒त्युः
कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॐ ॥ २ ॥

यः भगवान् । आत्मदा ज्ञानदः । बलदा शक्तिदः । विश्वे सर्वे देवाः । यस्य सकाशात् । प्रशिषं अनुग्रहलक्षणं फलम् । 'कामयन्ते' इति शेषः । यस्येति द्वितीयार्थे षष्ठी । यमित्यर्थः । उपासते आराधयन्ति । यस्य छाया अमृतम् । 'देवानाम्' इति शेषः । यस्य छाया मृत्युः । 'असुराणाम् ' इति शेषः । 'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमति नेनीयमानः' इति श्रुतेः । तस्मै काय देवाय हविषा विधेम । अन्यत्र अमुख्यत्वेन अयमेवार्थः ॥२॥

॥ यः प्राणत इति ॥

ॐ यः प्रा॑ण॒तो नि॑मिष॒तो म॑हि॒त्वैक॒ इद्राजा॒
जग॑तो ब॒भूव॑ । य ईशे॑ अ॒स्य द्विप॒दश्चतु॑ष्पदः॒
कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॐ ॥३॥

यः भगवान् । प्राणतः सचेष्टस्य । निमिषतः अचेष्टस्य जगतः । राजा स्वामी । एक इत् एक एव । महित्वा स्वमहिम्ना । बभूव अभवत् । यः अस्य प्रत्यक्षसिद्धस्य । द्विपदः मनुष्यादेः । चतुष्पदः गवादेः । ईशे ईष्टे स्वामित्वं कर्तुं

समर्थोऽस्तीत्यर्थः । तस्मै कस्मै इति । अन्यत्र यः ब्रह्मा । प्राणतः सर्वचेष्टकात् विष्णोः । 'वैकुण्ठः पुरुषः प्राणः' इत्युक्तेः । 'प्राप्तेन' इति शेषः । महिम्ना निमिषतः निमेषणरूपक्रियावतो जगतः । एक एव राजा बभूव । शेषं समानम् ॥३॥

**॥ यस्येम इति ॥**

**ॐ यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॐ ॥४॥**

इमे हिमवन्तः, बहुवचनमाद्यर्थे । हिमवदादयः पर्वता इत्यर्थः । महित्वा 'सप्तसु प्रथमा' इति सूत्रात् पञ्चम्यर्थे प्रथमा । सापि हेत्वर्थे । यन्महिम्नो हेतोः । यस्य यद्वशे सन्ति । किञ्च ज्ञानिनः रसया सह पृथिव्या सह । 'रसा विश्वम्भरा स्थिरा' इत्यभिधानम् । समुद्रं, जात्येकवचनम् , समुद्रांश्च । अन्तरिक्षं वा । तन्नामसु पाठात् । 'नभो ददाति श्वसतां मार्गं यन्नियमाददः' इत्युक्तेः । यस्य यद्वशे आहुः । अपि च यस्य यस्य देवस्य । इमाः प्रदिशः सर्वदिशोऽभिमन्यमाना इत्यर्थः । ते सर्वे इन्द्रादयः । यस्य भगवतः । बाहू द्विवचनं दक्षिणवामभाग-सूचनार्थं । न तु बाहुद्वित्वाभिप्रायेण । 'इन्द्रादयो बाहव आहुरस्य' इति वचनात् । बाहुभ्यः उत्पन्ना इत्यर्थः ।

**'विष्णोरङ्गसमुद्भूता विष्णोरङ्गानि देवताः ।**
**उच्यन्ते सर्वदेवेषु स्वरूपाभेदिनोऽपि तु ॥ इति भागवततात्पर्योक्तेः ।**

यद्वा यस्य बाहू बाहूत्पन्नाः । प्रदिशः दिगभिमानिनो देवाः । यस्य यद्वशे सन्ति । तस्मै कस्मै इति पूर्ववत् । अन्यत्रापि अमुख्यया वृत्त्या समानोऽर्थ एव ॥४॥

॥ येन द्यौरिति ॥

ॐ येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः । यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॐ ॥५॥

येन भगवता । द्यौः ऊर्ध्वं ब्रह्माण्डखर्परम् । उग्रा ऊर्ध्वं धृता । धातूनां अनेकार्थत्वात् । उपपदान्त्यस्य दस्य च गः । चशब्दो यच्छब्दानुकर्षणार्थः । येन पृथिवी दृळ्हा अभेद्या कृता । किञ्च येन स्वः स्वर्गाख्यं भुवनम् । अन्तरिक्षे स्तभितं स्तम्भितम् । येन नाकः सर्वदुःखरहितो वैकुण्ठाख्यो लोकः स्तभितः । यः रजसः जात्येकवचनं, पार्थिवरजोभ्योऽपि । विमानः परिमाणरहितः । तस्मै कस्मै इति । अन्यत्र नाकः सत्यलोकः । यः रजसः रजोगुणस्य । विमानः विविक्तः मानः अभिमानो यस्येति स तथा ॥५॥

इत्येकवर्गव्याख्यानम् ॥१॥

॥ यं क्रन्दसीति ॥

ॐ यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॐ ॥६॥

अत्र रक्षोमित्रविवक्षया नपुंसकत्वं, लिङ्गव्यत्ययेन वा योजना । मधुकैटभौ जयविजयौ च कर्तारौ । तत्र दैत्यौ अवसा अवनहेतुभूतवरेण । तस्तभाने स्तम्भयुक्ते अतिगर्विते इत्यर्थः । क्रन्दसी अत्याक्रोशयुक्ते अतिदुःखिते इति यावत् भवेताम् । जयविजयौ तु मनसा ज्ञानेन । यं रेजमाने शरणं प्राप्ते सति रेजतेशब्दस्य गतिकर्मसु पाठात् । अभ्यैक्षेतां सम्मुखदर्शनं प्रापतुः । यद्वा जयविजयावेव कर्तारौ प्रथमजन्मनि मृतिकाले क्रन्दयुक्तौ अभूताम् । द्वितीयजन्मनि अवनहेतुब्रह्मवरेण गर्वितौ अभूतां तृतीयजन्मनि मनसा ज्ञानेन प्राप्तौ सन्तौ । अभ्यैक्षेतां चक्रादिचिह्नयुक्तमपश्येताम् । उक्तञ्च

'हिरण्यकशिपुर्भूतममंसत मृत्तौ हरिम् ।
अतो भयानको जातस्तत्र राजानमेव च ॥

मत्वा राजैव सञ्जातः शङ्खचक्रादिलक्षणैः ।
मृतिकाले हरिञ्चैव मत्वा भक्त्यैव केवलम् ।
दास्यत्वं हरिमाविश्य प्राप्यैव मनुजोऽपि तु ॥ इति ।

अथवा तामसशुद्धतामसाख्ये भूते पूर्वान्वये कर्तारौ । सात्त्विकशुद्धसात्त्विकभूते द्वितीयान्वये कर्तारौ । राजसस्य यथायोग्यं सात्त्विकतामसयोरन्तर्भावात् शुद्धराजसस्य नित्यसंसारित्वात्पृथगुक्तिः । उतवा परावरभक्तौ कर्तारौ । यं मनसा ज्ञानेन । रेजमाने 'अयं सर्वेष्टदाता मे' इत्यादिना जानमानौ, गत्यर्थानां ज्ञानार्थत्वात् । यं क्रन्दसी 'मामुद्धर दयासिन्धो' इत्यादिना क्रोशमानौ, अवसा यद्रक्षणे तस्थभाने स्तम्भितौ सन्तौ पतनाद्रक्षिताविति यावत् । यं अभ्यैक्षेतां समीप एव अपश्यताम् । यत्र सूरः सूर्यः । अधि अधिकृत्य । उदितः सन् विभाति प्रकाशते । तस्मै कस्मै इति । अन्यत्र क्रन्दसी आक्रोशयुक्तौ सांसारिकदुःखान्मुमुक्षू इन्द्रविरोचनौ । यं रेजमाने प्राप्तौ सन्तौ । अवसा दाक्षिण्यरक्षणेन । तस्तभाने समानोपदेशात्स्तम्भितौ । 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते स आत्मा' इत्याकारकोपदेशेन मनसा विचारेण अभ्यैक्षेतां स्वयोग्यमपश्यताम् । यत्र उपदिष्टात्मतत्त्वे । उदितः उदयं प्राप्तः । सूरः सूर्यः । अधि अधिकृतः विभाति । 'विरोचनस्य' इति शेषः । इन्द्रस्य तु सूरः सूयते तत् सु कार्यं जगत्, तस्मिन्रमतेऽसौ सूरः । उपपदे दैर्घ्यं निरुक्तत्वात् । स विष्णुः । अधि अधिक म् । उदित उत्कर्षं प्राप्तः । विभाति तस्मै कस्मै इति ॥६॥

॥ आपो हेति ॥

ॐ आपो॑ ह॒ यद्बृ॑ह॒तीर्विश्व॒माय॒न् गर्भं॒ दधा॑ना
ज॒नय॑न्तीर॒ग्निम् । ततो॑ दे॒वाना॒ं सम॑वर्त॒तासु॒रेक॒ः
कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॐ ॥७॥

बृहतीरापः अव्याकृतोदकानि । तदभिमानिनी रमा अत्र अप्शब्देन लक्ष्यते । बहुवचनं तु जयादिबहुरूपत्वात् । अग्निं अग्रगण्यम् । 'अग्रणीत्वं यदग्नित्वम्' इति ऋग्भाष्योक्तेः । विश्वं मुख्यं प्राणम् । 'विश्वो वायुः समुद्दिष्टः' इत्युक्तेः । जनयन्ती जनयन्त्यः सत्यः । गर्भं दधाना धारयन्त्यः । यत् यम् । आयन् उपागच्छन् । ह प्रसिद्धम् । ततो गर्भात् । देवानां एकः मुख्यः । असुः प्राणः । समवर्तत उदपद्यत ।

**'सङ्कर्षणाच्चापि जयातनूजो बभूव साक्षाद्बलसंविदात्मा ।**
**वायुर्य एवाथ विरिञ्चनामा भविष्य आद्यो न परस्ततो हि''॥ इत्युक्तेः ॥**

तस्मै कस्मै इति । अन्यत्र यत् यस्य । बृहतीः अलौकिकाः । आपः कर्माणि । तत्रामसु पाठात् । विश्वं जगत् । जनयन्ती उत्पादयन्त्यः । दधानाः पोषयन्त्यश्च । गर्भं स्वान्तर्यामिणम् ।अग्निं स्वाग्रे वर्तमानं विष्णुम् । आयन् प्रापुः । ततः कारणात् । असुः पूर्वप्राणरूपो ब्रह्मा । देवानां एकः मुख्यः । समवर्तत अभूत् । तस्मै कस्मै इति ॥७॥

**॥ यश्चिदिति ॥**

**ॐ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् । यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॐ ॥८॥**

यः चित् ज्ञानरूपः । यज्ञं आपः अतिशयेन पालयन् । विष्णुः दक्षं सृष्ट्यादिकरणशक्तं ब्रह्माणम् । जनयन्तीः उत्पादकाः । दधानाः पोषकाश्च आपः कर्माणि । महिना स्वमहिम्नैव । पर्यपश्यत् आलोचयत् । न परप्रेरणयेति भावः । तत्र हेतुः । यो विष्णुरेक एव देवेषु अधिदेवोऽधिको देव आसीत् । तस्मै कस्मै इति । अन्यत्र यः ब्रह्मा । जनयन्तीः विश्वजनकाः । दधानाः विश्वपोषकाः । आपः आ सर्वाणि स्वकर्माणि । 'कुर्वन्नपि' इति शेषः । यज्ञं विष्णुम् । 'यज्ञो वै विष्णुः' इति श्रुतेः । महिम्ना स्वसामर्थ्येन । दक्षं सर्वकर्मशक्तम् । अपश्यत् ।

अत एव 'यश्च धातरि सम्मतः' इत्युक्तिः । यः ब्रह्मा । एकः । देवेषु अधि मुख्यः । आसीत् । तस्मै कस्मै इति ॥ ८॥

॥ मा न इति ॥

ॐ मा नों हिंसीज्जनिता यः पृथिव्या यो वा
दिवं सत्यधर्मा जजान । यश्चापश्चन्द्रा बृहती-
र्जजान कस्मै देवाय हविषा विधेम ॐ ॥९॥

यः पृथिव्याः जनिता उत्पादकः । यश्च सत्यधर्मा सत्याः त्रिकालाबाधिताः धर्माः गुणक्रियादयो यस्य स तथा । दिवं द्युलोकम् । जजान उत्पादितवान् । यश्च बृहतीः अलौकिकत्वेन महतीः । चन्द्राः सर्वलोकाह्लादकाः । अपः कर्माणि जजान । स विष्णुः । नः अस्मान् । मा हिंसीत् मा मारयतु । अत एव तस्मै कस्मै इति । यद्वा यस्मै कस्मै काय देवाय हविषा विधेम स नो मा हिंसीत् इति । अन्यत्राप्यमुख्यया वृत्त्याऽयमेवार्थो ज्ञेयः ॥९॥

॥ प्रजापत इति ॥

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि
परि ता बभूव । यत्कामास्ते जुहुमस्तन्नों अस्तु
वयं स्याम पतयो रयीणाम् ॐ ॥१०॥

'प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः' इति प्रजापतिसंहितोक्तेः । हे प्रजापते विष्णो । अन्यः विश्वस्माद्भेदवान् भवान् । केवलमित्यध्याहृत्याग्रे योजनीयम् । तदित्थम् । न केवलं विश्वा सर्वाणि त्वत् जातानि एतानि भूतानि परिता बभूव पराभावयत् किन्तु अजातान्यपीति । अत एव 'सृज्यसृष्टावीक्षाबभूव' इति श्रीमदाचार्यवचनम् । वयं यत्कामाः यदिष्टं कामयमानाः । ते त्वाम् । जुहुमः यजामः । तदिष्टं नः अस्माकं अस्तु । किं तदिष्टमित्यतो वक्ति । वयं रयीणां बहुधनानां पतयः स्याम इति । अन्यत्र हे प्रजापते ब्रह्मन् । त्वदन्यः पुमान् जातानि विश्वा सर्वाणि एतानि भूतानि परिता

बभूव त्वमेव पराभावयसीत्यर्थः । जातानीत्यनेन अजातजगत्पराभावने ब्रह्मणः शक्तिर्नास्ति विष्णोरेव असौ अस्तीति ध्वनितम् । शेषं समानम् ॥१०॥

इतः परं केचित् 'वसुं न' इति पञ्चर्चः नैतन्मन्त्राङ्गम् । तासां चित्र महादेवताकत्वस्यानुक्रमणिकायां उक्तत्वेन ब्रह्मदेवताकत्वाभावात् ब्रह्मलिङ्गाभावाच्च इत्याहुः । तन्न, चित्रमहोऽग्निशब्दयोः प्रवृत्तिनिमित्तयोः लोकविलक्षण-तेजस्वित्वाग्र्यत्वयोर्ब्रह्मणि सम्भवात् । तन्त्रसारेऽपि ''हिरण्यगर्भसूक्तं तु भृगुदृष्टं प्रकीर्तितम्'' इत्युक्तं । तस्य भृगुऋषिकत्वस्य च पञ्चदश्यामृचि स्थितेन ''भृगवो विरुरुचुः'' इत्यनेन सूचितत्वाच्च । यथा प्राचीननिरुक्तानुसारेण प्रवृत्तस्य ऋग्भाष्यस्यार्वाचीनविसंवादो नादरणीय एवं सर्वानुक्रमविसंवादोऽपीत्यतोऽयं पञ्चदशर्च एव मन्त्रः ॥१०॥

**॥ वसुमिति ॥**

**ॐ वसुं न चित्रमहसं गृणीषे वामं शेवमतिथिमद्विषेण्यम् । स रासते शुरुधो विश्वधायसोऽग्निर्होता गृहपतिः सुवीर्यम् ॐ ॥११॥**

हे भगवन् त्वं यं वसुमग्निं 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु' इत्यभिधानात् । चित्रमहसं न चित्रमाश्चर्यं महस्तेजो यस्येति तादृशमात्मस्वरूपमिव । 'महस्तूत्सवतेजसोः' इत्यभिधानम् । गृणीषे वर्णयसि । चित्रमहसं विशिनष्टि **॥ वाममिति ॥** वामं प्रशस्यम् । शेवं सुखरूपम् । तन्नामसु पाठात् । अतिथिं अति अधिकं थं अन्नं यस्येति तम् । छान्दसत्वादिः । 'अत्यन्नश्चातिथिः प्रोक्तो यस्मादन्नं थमुच्यते' इति कौर्मे । अद्विषेण्यं अद्वेष्यम् । सः शुरुधः शु शीघ्रं रुणद्धीति शुरुत् तस्य । शुशब्दस्य शीघ्रनामसु हि पाठः । शुचं शोकं रुणद्धीति शुरुत् तस्य । छान्दसत्वादुपपदान्त्यलोप इति वा । विश्वधायसः विश्वधारकस्य तव । होता हेमकर्ता । गृहपतिः गृहमेषामस्तीति गृहाः गृहस्थाश्रमिणः । ''अर्श आद्यच्'' । तेषां पतिः पालकः अग्निः । सुवीर्यं

महद्बलं महापराक्रमं पुत्रं वा रासते ददाति । यद्धोता इदं फलं ददाति स दास्यतीति किमु वक्तव्यमित्यर्थः । अन्यत्र हे ब्रह्मन् त्वं 'वरसुर्वसुरित्युक्तः' इत्युक्तेः । पूर्णसुखत्वात्सर्वत्र विवासकर्तृत्वाच्च वसुं विष्णुम् । चित्रमहसं न चित्रभानुमिव । गृणीषे स्तौषि । स भगवान् अग्निः स्वतो गन्तुमशक्तं विश्वं नयति प्रवर्तयतीति सः तथा । होता यजमानः । गृहपतिः शुरुधो विश्वधायसस्ते सुवीर्यं सर्जनशक्तिम् । रासतेऽतस्त्वादृशोऽन्यो विष्णुप्रियो नास्तीति भावः ॥११॥

॥ जुषाण इति ॥

ॐ जुषाणो अंग्ने प्रतिं हर्य मे वचो विश्वांनि विद्वान्वयुनानि सुक्रतो । घृतंनिर्णिग्ब्रह्मंणे गातुमैरंय तवं देवा अंजयन्ननुं व्रतम् ॐ ॥१२॥

हे अग्ने अङ्गप्रवर्तक हरे । त्वं मे वचो जुषाणः सेवमानः श्रुण्वन्नित्यर्थः । प्रतिहर्य अवधारय । हे सुक्रतो सुखज्ञानरूप । क्रतुशब्दस्य प्रज्ञानामसु पाठात् । यतः विश्वानि सर्वाणि । वयुनानि ज्ञानानि । विद्वान् जानन्नसि । तव । 'घृ क्षरणदीप्त्योः' इति धातोः घृतं दीप्तं निर्णिक् रूपं च तत् । निर्णिक्शब्दस्य तन्नामसु पाठात् । गातुं स्तोतुम् । ब्रह्मणे तात्त्विकेभ्यः । ऐरय अधिकं प्रेरय । तथा सति देवास्तात्त्विकाः । तव व्रतं कर्म । तन्नामसु पाठात् । अन्वजनयन् अनुसरिष्यन्ति । छान्दसत्वात् व्यत्ययः । अन्यत्र पूर्वार्धं पूर्ववत् । हे घृतनिर्णिक् दीप्तरूप । ब्रह्मणे द्वितीयार्थे चतुर्थी । गुणपूर्णहरिमित्यर्थः । गातुमैरय 'माम्' इति शेषः । तव प्रेरणेन सर्वेऽपि देवा मां तथा प्रेरयेयुः इत्याशयेनाह तवेति ॥ अन्वजनयत् अनुसरेयुरित्यर्थः ॥१२॥

॥ सप्त धामानीति ॥

ॐ सप्तधामांनि परियन्नमंर्त्यो दाशंद्दाशुषें सुकृतें मामहस्व । सुवीरेंण रयिणांग्ने स्वाभुवो यस्त आनंट् समिधा तं जुंषस्व ॐ ॥१३॥

हे परियन् व्याप्तभगवन् । अमर्त्यः मर्त्यविलक्षणो ब्रह्मा । सुकृते सुखार्थं, पुण्यविषये वा । यद्वा सुखं कुर्वते । सप्तधामानि भूरादिसप्तलोकान् । दाशुषे दात्रे तुभ्यम् । दाशत् दत्तवान् । 'उपचारान्' इति शेषः । त्वं तं ब्रह्माणम् । सुवीरेण शोभनाः आज्ञाधाराका वीरा यस्मिन् तेन । रयिणा धनेन । मामहस्व सम्पूजय । 'मह पूजायाम्' इति हि धातुः । सत्कुरुष्वेत्यर्थः । 'आधिक्येऽधिकम्' इति सूत्रात् पूर्वमकारस्यातिशयार्थता । हे अग्ने अग्रयस्वाभाव । सुष्ठु आसमन्ताद्भवतीति स्वाभूः व्याप्तः तस्य । ते त्वया । यः ब्रह्मा । आनट् व्याप्तः । तं ब्रह्माणं समिधा सम्यक् दीपनेन 'इन्धि दीप्तौ' इति धातोः । जुषस्व प्रकाशयेत्यर्थः । अन्यत्र योऽमर्त्यः जीवविलक्षणो भगवान् । दाशुषे उपचारसमर्पकाय । सुकृते शोभनकर्मकृते तुभ्यम् । सुवीरेण शोभनपुत्रयुक्तेन । रयिणा पारमेष्ठ्यरूपधनेन । सह सप्तधामानि भूरादिसप्तलोकान् दाशत् ददौ । हे अग्ने अग्रनेय ब्रह्मन् । तं मामहस्व सम्पूजय । अन्तर्णिच् । 'मया' इति शेषः । सः भगवान् स्वाभुवः ते तव आनट् व्यापकः । त्वं तं समिधा समिदादिहविषा जुषस्व जोषयस्व । अत्राप्यन्तर्णिच् । 'मया'इति शेषश्च ॥१३॥

॥ यज्ञस्येति ॥

ॐ यज्ञस्य केतुं प्रथमं पुरोहितं हविष्मन्त ईळते
सप्त वाजिनम् । शृण्वन्तमग्निं घृतपृष्ठमुक्षणं
पृणन्तं देवं पृणते सुवीर्यम् ॐ ॥१४॥

हविष्मन्तः यजमानाः सप्तर्षयः । यज्ञस्य केतुं ज्ञातारम् । तस्य प्रज्ञानामसु पाठात् । प्रथमं मुख्यम् । पुरोहितं अनादितो हितकारिणम् । 'भक्तानां' इति शेषः । वाजिनं अन्नस्वामिनं वाजशब्दस्यान्ननामसुपाठात् । शृण्वन्तं 'भक्तस्तवम्' इति शेषः । अग्निं अङ्गप्रवर्तकम् । घृतपृष्ठं घृतं प्रदीप्तं पृष्ठं वैकुण्ठादिस्थानं यस्य तम् । यद्वा घृतं गलितं पृष्ठं पृष्ठजोऽधर्मः यस्मात्तं 'घृ क्षरणदीप्त्योः' इति धातुः । 'धर्मस्तनौ धर्ममयश्च पृष्ठम्' इति भागवते ।

**'विष्णोरङ्गसमुद्भूता विष्णोरङ्गानि देवताः ।**
**उच्यन्ते सर्ववेदेषु स्वरूपाभेदिनोऽपि तु'** ॥ इति तात्पर्ये ।

उक्षणं महान्तम् । तन्नामसु पाठात् । पृणते हविर्ददते यजमानाय । सुवीर्यं पृणन्तं ददतम् । देवं द्योतनादिगुणविशिष्टम् । हरिं ईळते स्तुवन्ति । 'ईड स्तुतौ' ऋक्षु डस्य ळः । अन्यत्रापि मुख्यतया अयमेवार्थः ॥१४॥

॥ त्वं दूत इति ॥

**ॐ त्वं दूतः प्रथमो वरेण्यः स हूयमानो अमृताय मत्स्व । त्वां मर्जयन्मरुतो दाशुषो गृहे त्वां स्तोमेभिर्भृगवो वि रुरुचुः ॐ ॥१५॥**

हे भगवन् यः प्रथमो मुख्यः । वरेण्यः प्रार्थ्यः । दूतः प्रेष्यः ।

**'यज्ञभागार्थमत्रस्थो देवसम्प्रेषितो यतः ।**
**दूतोऽग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद्यतः'**॥ इति ऋग्भाष्योक्तेः ।

स त्वं हूयमानः आकार्यमाणः । 'मया' इति शेषः । अमृताय, तृतीयार्थे चतुर्थी । अमृतेन अयाचितेन मोक्षदानेन इत्यर्थः । ''अमृतं यदयाचितम्'' इति भागवतोक्तेः । मत्स्व सुखय । अन्तर्णीतण्यर्थात् 'मदि हर्षे' इति धातोः परस्मै लोट् । 'माम्' इति शेषः । त्वयाऽनुगृहीतं देवा अपि सेवन्ते किं पुनर्मानवा इति भावेनाह ॥ **त्वामिति** ॥ मरुतः देवाः । त्वामुद्दिश्य दाशुषः यजमानस्य । गृहे मर्जयन् मार्जनं कुर्वन्ति । न केवलमहमित्थं ब्रुवे, किं तु महावैष्णवा भृगवोऽपि एवमाहुरित्याह ॥ त्वामिति ॥ भृगवः भृगुवंशस्थाः भृग्वादयो वा । त्वां स्तोमेभिः ''हिरण्यगर्भः''इत्यादि पञ्चदशामन्त्रकृतैस्स्तवनैः । विरुरुचुः प्रकाशयामासुः । अन्यत्राप्यमुख्यतयाऽयमेवार्थो ज्ञेयः ॥१५॥

॥ इति हिरण्यगर्भसूक्तव्याख्यानम् ॥४१॥

**४२.ब्रह्ममन्त्रः**

तस्यैवान्यः पञ्चाक्षरो मन्त्रः ॥ **ब्रह्मण इति** ॥

**॥ ॐ ब्रह्मणे नमः ॐ ॥**

बृंहति पूर्णो भवति गुणैरिति तस्मै । ''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणाः'' इति श्रुतेः । 'बृह वृद्धौ'इति धातोः ''आतो मनिन् क्वनिब्वनिपश्च'' इति सूत्रान्तरेण ''अन्येभ्योऽपि दृश्यते''इति सूत्रेण मनिन् प्रत्यये दृशिहणसामर्थ्यात् अमागमश्चेति रूपसिद्धिः । अन्यत्र बृंहयति वर्धयति प्रजाः इति अन्तर्भावितण्यर्थाद्बृहेः ''नोऽञ्च''इति धातोः नस्य अदादेशः ॥४२॥

**४३. अष्टाक्षरब्रह्ममन्त्रः**

तस्यैव अपरोऽष्टाक्षरमन्त्रः ॥ **हिरण्येति** ॥

**॥ ॐ हिरण्यगर्भाय नमः ॐ ॥**

हिरण्येति हिरण्यं हिरण्मयं ब्रह्माण्डं । ''तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्'' इति मनूक्तेः । तस्य गर्भोऽन्तर्यामी । यद्वा गर्भे कुक्षौ यस्य इति । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इत्यभिधानात् । यद्वा हिरुक् विलक्षणं च तत् ण्यञ्च सुखं च हिरण्यम् । ''हिरुक् सुखं हिरण्यं स्यात् बाह्यानन्दात् पृथग्यतः''इत्यैतरेयभाष्ये । स्वरूपसुखमित्यर्थः । तद्गिरति भुनक्ति अनुभवतीति यावत् स तथा तस्मै । 'गृ निगरणे' अर्तिगृभ्यां भन् । अन्यत्र हिरण्यस्य लोकविलक्षणसुखस्य हरेर्गर्भोऽर्भकः तस्मै । यद्वा हिरण्यं हरिं गृणातीति 'गृ शब्दे' तस्मै नम इति ॥४३॥

## ४४.बळित्थेतिसूक्तरूपप्राणमन्त्रव्याख्यानं

अथ प्राणनामकविष्णोः पञ्चर्चसूक्तमन्त्रः ॥ बळित्थेति ॥

ॐ बळित्था तद् वर्पुषे धायि दर्शतं देवस्य भर्गः
सहसो यतो जनि । यदीमुप ह्वरते साधते
मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॐ ॥१॥

देवस्य विश्वसर्जनादिक्रीडाविशिष्टस्य हरेः । बट् बलात्मकम् । ''स वै बलं बलिनां चापरेषाम्'' इत्युक्तेः । दर्शतं ज्ञानेन ततं ज्ञारूपमित्यर्थः । ''सत्यं ज्ञानम्''इत्यादिश्रुतेः । भर्गः विश्वस्य भरणगमनकर्तृ । 'डुधाञ् धारणे' 'गम्लृ गतौ' आभ्यां असुन् डिच् । डित्वात् टिलोपे भर्ग इति सकारान्तं नपुंसकरूपं सिद्ध्यति । एतादृशं यन्मूलरूपं तत् इत्था इत्थं वक्ष्यमाणप्रकारेण । वपुषे अवताराय । धायि अधायि प्रयुक्तमित्यर्थः । कोऽसौ अवतार इत्यत आह ॥ **यतः इति** ॥ यदर्थं सहसः बलरूपस्य । 'सहो बले ज्योतिषि मार्गशीर्षे' इत्यभिधानम् । वायोः मतिः हनुमदाख्यं रूपम्, 'हनुमान्मतिशब्दित' इति वचनात् । जनि अजनि आविर्भूतम् । यत् ईं सीतारूपिणीं लक्ष्मीम् । उपह्वरते समीपे स्थापयति । साधते च लोकमन्ददृष्ट्या रावणाहृतां साधयति पुनरानयतीत्यर्थः । येन ऋतस्य अग्नेः । ''अग्निर्वा ऋतम्''इति श्रुतेः । सस्रुतः आनन्दबाष्पयुताः । धेनाः शपथं कर्तुं स्वस्मिन्पतितां सीतां गृहीत्वा 'निर्दोषियं त्वया गृह्यतां' इत्याद्याकारकाः वाचः । तच्छब्दस्य तन्नामसु पाठात् । अनयन्त मानिताः । यद्वा ''ऋतं सत्यं परं ब्रह्म''इत्यादिश्रुतेः ऋतस्य रुद्रस्य । धेनाः रक्षसां मरणाभावकरवरदानरूपा वाचः । सस्रुतः स्रवणयुक्ताः । गलितफलाः निष्फला इत्यर्थः । अनयन्त प्रापिताः कृता इति यावत् ।

मुख्यप्राणविषये तु सहसः वायोर्देवस्य । बट् बलात्मकम् । दर्शतं ज्ञानात्मकम् । भर्गः पोषकं प्रवर्तकं च यन्मूलरूपं तत् । इत्था वक्ष्यमाणरीत्या । वपुषे अवतारं कर्तुम् । धायि विष्णुना प्रेरितम् । यतः यस्मान्मूलरूपात् । जनि

जातम् । यर्दी यदेव । मतिः हनुमदाख्यं प्रथमरूपम् । उप रामसमीपे । ह्वरते तिष्टति । साधते साधयति च । 'रामकार्याणि' इति शेषः । येन रूपेण ऋतस्य रामस्य । सस्रुतः अमृतस्रावयुक्ताः । धेनाः अर्थपुष्टिमत्यो वाचः । अनयन्त सीतां प्रति नीता इत्यर्थः ॥१॥

॥ पृक्ष इति ॥

ॐ पृक्षो वपुः पितुमान् नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु । तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॐ ॥२॥

अस्य विष्णोः द्वितीयं वपुः पृक्षः पृक्ताः सम्पृक्ताः विशेषबलेन परस्परमभिन्ना इति यावत्, षाः षड्गुणाः यस्य सः कृष्णः । यद्वा पृतनां सेनां क्षिणोतीति पृक्षः। पृक्शब्दोपपदात् 'क्षि क्षये'इत्यस्मात् ड प्रत्यये डित्वात् टि लोपे च पृक्ष इति रूपं सिध्यति । उपपदे तकारलोपो निरुक्तत्वात् । जरासन्धादिसैन्यहन्ता इत्यर्थः ।

**हनिष्यामि बलं ह्येतत् भुवि भारं समाहितम् ।**
**मागधेन समानीतं पश्यतां सर्वभूभृताम् ॥ इति कृष्णचिन्तनोक्तेर्भगवते ।**

पितुमान् पितुरित्यन्ननाम तद्वान् अन्नाधिपतिरित्यर्थः । उक्तं च ''ॐ नमो भगवते विष्णवे अन्नाधिपतये स्वाहा''इति । यद्वा बह्वन्नभोक्तृत्वात् तद्वान् इत्युच्यते ''बलिमाददबृहद्वपुः''इत्युक्तेः । ''अत्ता चराचरग्रहणात्''इति सूत्राद्वा । यः सप्तशिवासु सप्तसङ्ख्याकाः शिवाः मङ्गलगुणाः यासु तासु । उक्तं च

**पतिमत्त्वं सुरूपत्वं पातिव्रत्यं सुपुत्रता ।**
**धर्मे स्थितिर्हरौ भक्तिर्दाक्ष्यं सप्तगुणाः स्त्रियाम् ॥ इति ।**

मातृषु देवकीसंज्ञजननीषु । गौरवार्थे बहुवचनम् । देवकीगर्भे इति यावत् । नित्यः त्यशब्दवाच्यवाय्वाकाशोपलक्षितपञ्चभूतात्मकदेहरहितस्सन् आ समन्तात् व्याप्त्या इति यावत् । ''देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः''

इत्युक्तेः । आशये शिष्ये । अथवा 'यस्य' इत्यध्याहारः । यस्य कृष्णस्य आशये हार्दाभिलाषे सति । सप्तशिवासु

**ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।**
**प्रोक्ताः सप्तशिवास्तत्र....॥**

इति सत्तत्वग्रन्थोक्तासु । नित्यः नित्यस्थितिमान् । वायुः पितुमान् बह्वन्नभोक्ता वृकोदररूपः । मातृषु कुन्त्याम् । 'अवततार' इति शेषः । अस्य वासुदेवस्य तृतीयं व्यासाख्यं रूपम् । वृषभस्य वृषवद्बलिवत् भातीति बृषभो धर्मः ''धर्मोऽसि वृषरूपधृक्''इत्युक्तेः तस्य । दोहसे पूर्त्यै 'दुह प्रपूरण' इति धातोः । रक्षणायेति यावत् । 'बभूव' इति शेषः । यस्मात् योषणः घृताची । अत्रापि बहुवचनं गौरवार्थे । दशप्रमतिं इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानसूर्यशनैश्चरेभ्यो दशभ्यः प्रकृष्टबुद्धिं रुद्रावतारं शुकम् । जनयन्त जनयामासुः । यद्वा यदर्थं योषणो मध्यगेहाख्यविप्रभार्या दशप्रमतिं दश पूर्णा प्रमतिः प्रज्ञा यस्येति तं पूर्णप्रज्ञाचार्यं इत्यर्थः ।

**दशेति सर्वमुद्दिष्टं पूर्णं सर्वमिहोच्यते ।**
**प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ॥ इति तैत्तिरीयभाष्योक्तेः ।**

जनयन्त अन्यत्र 'सहसे' इत्यनुवर्तते । वायोर्द्वितीयं वपुः द्वितीयोऽवतारः । भीमाख्यः पृक्षनामकः पृतनाक्षयकारित्वात् । पितुमान् बह्वन्नभोक्ता । प्रसिद्धमिदं बकासुरवधादौ । सप्तशिवासु उक्तरूपासु ऋगाद्यासु । मातृषु मापयन्ति हरिमिति मातरः, तासु हरिज्ञानसाधनेष्विति यावत् । नित्यो नित्यम् । आ समन्तात् शये शेते रेमे इति यावत् । वृषभस्य वायोस्तृतीयं 'वपुः' इत्यनुवर्तते दशप्रमतिं पूर्णप्रज्ञनामकं अभूत् । यं अस्य विष्णोर्दोहसे तत्त्वज्ञानदोहनार्थं योषणः अजनयन्त इति । अत्र सर्वत्र अडभावश्छान्दसः ॥२॥

॥ निर्यदीमिति ॥

ॐ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः
शवसाऽऽक्रन्त सूरयः । यदीमनु प्रदिवो मध्व
आधवे गुहा सन्तं मातरिश्वा मथायति ॐ ॥३॥

यत् येन । महिषस्य महाषड्गुणस्य पूज्यस्य वा स्वस्य । ईं एव । शवसा सुखेन सह । बुध्नात् बोधरूपात् सुखज्ञानलक्षणात् इत्यर्थः । वर्पसः रूपात् रूपेण इत्यर्थः । तन्नामसु पाठात् । ईशानासः ब्रह्माद्या लोकेशाः । सूरयः सनकाद्या ज्ञानिनः । निराक्रन्त निराकृताः तुच्छीकृता इति यावत् । ब्रह्मसनकादिमध्ये कोऽप्यस्य सुखज्ञानाभ्यां समो नाभूदिति भावः । यत् यः । अन्वीं अनन्तरमेव । 'अधिकारस्य' इति योग्यतया शेषेण सम्बन्धः । मध्वः ''मधुनाम सुखं विद्यात्'' इत्युक्तेः मधुयुक्तं वं ज्ञानं यस्येति मध्वः । मध्व इत्यत्र उकारलोपो निरुक्तत्वात् । मातरिश्वा स्वज्ञातरि नारदादौ शु शीघ्रं वाति गच्छतीति मातरिश्वा । शु शब्दस्य शीघ्रनामसु पाठात् । 'वा गतिगन्धनयोः'इति धातोश्च। ''आहूत इव मे शीघ्रं दर्शनं याति चेतसि''इति तदुक्तेः । यद्वा मातरि हृदयाकाशे श्वयति गच्छतीति स तथा । 'टुओश्वि गतिवृध्योः' । प्रदिवः 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इत्यभिधानात् । प्रं विष्णुं दिव्यति द्योतयति प्रकाशयति इति यावत् । तस्य प्रदिवः ज्ञानस्य । आधवे न धूयते कम्प्यते तत् अधु । 'धूञ् कम्पने' तस्य भावः आधवं तस्मिन् स्थैर्ये इत्यर्थः । गुहासन्तं हृदयगुहायां वर्तमानाज्ञानान्धकारम् । मथायति मथ्नाति नाशयतीत्यर्थः ।

अन्यत्र यदीं यस्मादेव । बुध्नात् बोधरूपात् तृतीयरूपात् पूर्णबोधात् । ईशानासः लोकेशा रुद्राद्याः मनुष्योत्तमपर्यन्ताः । सूरयश्च महिषस्य हरेः । वर्पसः वरणीयत्वादिना वर्पस्संज्ञकान् गुणान् । शवसा सुखेन । निराक्रन्त नितरां ज्ञातवन्तः । यदीं य एव । अनु अनन्तरम् । प्रदिवः प्रकृषद्युत्यादिरूपः । मध्वः

आनन्दतीर्थाख्यः । मातरिश्वा मुख्यप्राणः । गुहासन्तं निर्गुणत्वाद्युक्तिभिर्गूहितं सन्तं परमात्मानम् । आधवे 'भावप्रधानो निर्देशः' आ समन्तान्तात् पतित्वे सर्वस्वामित्वज्ञापनार्थं इति यावत् । मथायति मथ्नाति । शास्त्रेण विचार्य निश्चाययति इति भावः ॥३॥

॥ प्रयदिति ॥

**ॐ प्र यत् पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति । उभा यदस्य जनुषं यदिन्वत आदिद् यविष्ठो अभवद् घृणा शुचिः ॐ ॥४॥**

यत्पितुरन्नं परमात् सर्वोत्कृष्टविष्णवे चतुर्थ्यर्थे पञ्चमी । प्रणीयते समर्प्यते । तदेवान्नं [1]प्रक्षुधः प्रकृष्टक्षुधाम् । वीरुधः विः परमात्मा ईः लक्ष्मीः तद्रुधः तदनुरोधिनो ब्रह्मरुद्रादयो देवाः । 'विः पक्षिपरमात्मनोः' इत्यभिधानम् । ''लक्ष्मीरीकार उच्यते'' इति । ''सप्तसु प्रथमा'' इति सूत्रात् षष्ठ्यर्थे प्रथमा । तेषां दंसु दन्तेषु । पर्या रोहति चर्वणार्थं गच्छति । भगवदनिवेदितं नैव गृण्हन्तीति भावः । ननु तस्य ब्रह्माण्डात् अप्युत्कृष्टस्य भक्तहृदयादौ कथं अवस्थानं घटते इत्यत आह ॥ उभे इति ॥ उभा उभे । घृणा क्रीडे । यत् यस्मात्कारणात् । यत् यस्य । जनुषं जन्मावतारम् । इन्वतः प्रापयतः । आदित् अस्मादेव कारणात् । यविष्ठः लघुरूपः अभवत् । तत्र हेतुः घृणाशुचिः घृणास्वभावः ।

अन्यत्र यत् तृतीयं रूपम् । पितुः स्वजनकात् । परमाद् विष्णोः सकाशात् । प्रणीयते विष्णुना सर्वकार्येषु प्रेर्यत इत्यर्थः । अथ च प्रक्षुधः प्रश्नरूपाः । वीरुधः प्रततीः । खण्डनार्थं दंसु दन्तेषु । पर्यारोहति स्थापयति । प्रश्नान् खण्डयितुं अनूद्य चर्वितवत् शकलीकरोतीत्यर्थः । यत् यस्मात् कारणात् । यस्य अस्य

१. 'पृक्षुधः' इति पाठः मुद्रितेषु पुस्तकेषु दरीदृश्यते । अयं पाठः सम्प्रदायगतश्च ।

वायोः । जनुषं जन्मावतारम् । उभा उभौ लक्ष्मीनारायणौ । इन्वतः प्रेरयतः । तस्मात् कारणात् आदित् आभ्यामेव लक्ष्मीनारायणाभ्यामेव । यविष्ठोऽवरोऽभवत् । तथा घृणाशुचिः कृपया शुद्धः ॥४॥

॥ आदिदिति ॥

**ॐ आदिन्मातॄराविशद्यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे । अनु यत् पूर्वा अरुहत् सनाजुवो नि नव्यसीष्ववरासु धावते ॐ॥५॥**

यतः आदित् घृणाक्रीडावशादेव । मातॄः कौसल्यादिजननीः । आविशत् तद्गर्भस्थोऽभूदित्यर्थः । यासु मातृषु । आशुचिः आ समन्ताच्छुचिः । शुक्लशोणितसम्बन्धरहितः । अत एव उर्विया उरुत्वेन महिमोत्कर्षेण । अहिंस्यमानः गर्भवासनिमित्तकदुखेन अवध्यमानः । विवावृधे विशेषेण अभिवृद्धोऽभूदित्यर्थः । यत् यथा । सनाजुवः सदा मातृत्वं गच्छन्तीः । 'जु गतौ' इति धातुः । पूर्वाः आदित्यादिमातॄः । अरुहत् प्रविवेश । तथा नव्यसीषु नूतनासु अवरास्वपि मातृषु । निधावति पुत्रत्वेन भवितुमिच्छति । परन्तु तादृशानुष्ठानमेव ताभिर्न क्रियत इति भावः ।

अन्यत्र आदित् लक्ष्मीनारायणप्रेरणादेव । मातॄः अञ्जनादीः । शेषं समानं पूर्वार्धे । सप्तशिवासु मातृष्वित्युक्तं प्राक्, तत्र सिंहावलोकनन्यायेन विशेषमाह । यत् यो मध्वः । सनाजुवः सर्वदा विद्यमानं परमात्मानं महायोगवृत्त्या महारूढ्या च तात्पर्येण एव जुषन्ते प्रतिपादयन्तीति सनाजुवः । पूर्वाः ऋगाद्याश्चतस्रो मातरः । ताः अनु अनुक्रमादेव, उपक्रमादिलिङ्गैः इत्यर्थः । अरुहत् अर्थं विचारयामास । अवरासु तिसृषु इतिहासपुराणपञ्चरात्राख्यासु । नव्यसीषु कृतत्वेन नूतनासु मातृषु । धावते उपक्रमादिपर्यालोचनं विनैव नितरां धावते शीघ्रं एवार्थं विचारयतीत्यर्थः । शीघ्रगमनमेव धावनमिति लोके प्रसिद्धम् ॥५॥

इति बळित्थेतिसूक्तरूपप्राणमन्त्रव्याख्यानं समाप्तम् ॥४४॥

**४५. प्राणमन्त्रः**

तस्यैवान्यः पञ्चाक्षरो मन्त्रः ॥ **प्राणायेति** ॥

**॥ ॐ प्राणाय नमः ॐ ॥**

**प्रकर्षेण आ समन्तान्नयति प्रवर्तयति सर्वमिति प्राणः तस्मै ।** ''सर्वस्य हि प्रणेतृत्वात् प्राणो नारायणः परः''इति हरिवंशे । यद्वा प्राणान्तर्यामी ''प्राणः प्राणायनाद्विष्णुः''इति शब्दनिर्णये । अथवा प्रकृष्टः आ समन्तात् ण आनन्दो यस्येति । ''णश्च निर्वृतिवाचकः'' इत्युक्तेः । ''प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते''इत्यैतरेयभाष्ये । उतवा प्रकर्षेण चेष्टकः । 'अन चेष्टायाम्'इति धातोः । अन्यत्र प्रः विष्णुः ''अकयप्रविसम्भूमसखहा विष्णुवाचकाः'' इत्यभिधानात् । तं अणति गच्छति जानाति वा । 'अण गतौ'इति धातोः गत्यर्थस्य हि ज्ञानार्थता । ''प्राणः परमुपगच्छति''इति श्रुतेः । यद्वा प्रार्थं विष्णुप्रीत्यर्थमिति यावत् । अ नयति चेष्टयति सर्वमिति । अथवा प्राद्विष्णोरेव आ णः अत्यान्दो यस्येति तस्मै नम इति ॥४५॥

**४६. अपानाख्यप्राणमन्त्रः**

अथ तस्यैव अपरः षडक्षरो मन्त्रः ॥ **अपानाय इति** ॥

**॥ॐ अपानाय नमः ॐ ॥**

पातीति पः रक्षकः, नास्ति पः यस्य इत्यन्वयः, अनः चेष्टकः, स चासौ स चेति । यद्वा न पानं अशुभभोगो यस्येति । ''नाशुभं स हरिः पिबेत्'' इत्युक्तेः । अथवा अपानयति अधो नयति दुष्टानिति । ''प्रकृष्टनयनात्प्राणोऽपानोऽवाङ्न-यनाद्धरिः'' इत्यैतरेयभाष्ये । अपनयति दोषानिति वा । ''यस्मादपनयेद्दोषानपानः''इति तैत्तिरीयभाष्ये । तस्मै नमः । अन्यत्र अपन अन्यरक्षकरहितेन विष्णुना अन्यते चेष्ट्यते स तथा । ''ऊर्ध्वं प्राणं उन्नयति अपानं प्रत्यगस्यति''इति श्रुतेः ॥४६॥

**४७. व्यानाख्यप्राणमन्त्रः**

तस्यैव इतरः पञ्चाक्षरो मन्त्रः ॥ **व्यानायेति** ॥

**॥ ॐ व्यानाय नमः ॐ ॥**

विशेषेण आ समन्तात् नयति प्रवर्तयति सर्वमिति । विं पक्षिरूपं गरुडं आ अनयति चेष्टयतीति वा । अथवा विना गरुडेन आ सर्वत्र नीयते प्राप्यते असौ । अथवा विशेषेण आ अनयति चेष्टयति सर्वमिति । ''विशेषाच्चेष्टयेद्यस्माद्व्यानाख्यः'' इति तैत्तिरीयभाष्ये । तस्मै नम इति । अन्यत्र विशब्दवाच्यगरुडोपलक्षित सर्वजीवजातं अं विष्णुं आनयति यथायोग्यं प्रापयति स तथा तस्मै ॥४७॥

**४८. उदानाख्यप्राणमन्त्रः**

अथ परस्तदीयः षडक्षरो मन्त्रः ॥ **उदानायेति** ॥

**॥ ॐ उदानाय नमः ॐ ॥**

उं रुद्रं दयते पालयति स उदः । 'देङ् पालने' इति हि धातुः । उदश्चासौ अनश्चेति । यद्वा उत् ऊर्ध्वं आ आत्मीयान् नयति स तथा । ''अन्यमन्यमतिनेनीयमानः'' इति श्रुतेः । उदं कर्म ज्ञानं वा । ''उदेति उद्भवति अनेन इति उदं ज्ञानं कर्म वा'' इति कर्मनिर्णयोक्तेः । तत् आनयति प्रापयतीति ''कर्ता कारयिता विष्णुः'' इत्युक्तेः । ''अज्ञानां ज्ञानदो विष्णुः''इति च । उदकं आ समन्तात् निम्नं स्थलं नयतीति । ''एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते'' इति श्रुतेः । तस्मै नम इति । अन्यत्र उदं विष्णुं आ अधिकं सर्वोत्तममिति यावत् । नयति शिष्येषूपदिशतीत्यर्थः । तस्मै नम इति ॥४८॥

**४९. समानाख्यप्राणमन्त्रः**

अथ तदीय एव पञ्चमः षडक्षरो मन्त्रः ॥ **समानाय इति** ॥

**॥ ॐ समानाय नमः ॐ ॥**

मानेन प्रमाणेन ज्ञानेन वा बहुमानेन वा सहिताय । यद्वा समः सज्ज्ञानः सलक्ष्मीको वा यथोपासनफलदाता वा स चासौ अनश्चेति । सं स्वरूपाभेदं आनयति ज्ञापयतीति । 'समभेदे समीचीने सुष्ठु पूजासुखेषु च'इति हि यादवः । अन्यत्र सः विष्णुः ''अकयप्रविसम्भूमसखहा विष्णुवाचका'' इत्यभिधानात् । मा लक्ष्मीः 'मः शिवे मा रमायां च'इति विश्वकोशात् । ताभ्यां नीयते प्रवर्त्यते, तौ आनयति अधिकत्वेन शिष्येषु उपदिशति वा स तथा । यद्वा सं विष्णुं मानयति बहुमानयति स समानः तस्मै नमः इति ।।४९।।

**५०. सरस्वतीवैदिकमन्त्रः**

अथ सारस्वतो वैदिको मन्त्रः ।। **गौरिति** ।।

**ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॐ ।।**

सहस्रं अनन्तं अक्षरमुदकं यस्याः सकाशात् सा विष्णुनाम्नी देवता । अक्षरशब्दस्य हि उदकनामसु पाठः । ''अप एव ससर्जादौ'' इत्यादि व्यासस्मृतेः । सलिलानि जलानि । तक्षती कुर्वती । एकपद्यादिरूपवती बभूवुषी भवतीति । परमे उत्कृष्टे अव्याकृते । व्योमन् व्योम्नि आकाशे । अनेन तदभिमानिनी रमा लक्ष्यते । तस्यामित्यर्थः । यद्वा व्योमनाम्न्यां रमायां । ''व्योतं जगदिदं यस्यां सा व्योम श्रीरुदाहृता''इति कौर्मे । गौरीः वाचः । गौरीशब्दस्य हि वाङ्नामसु पाठः । तदभिमानित्वात् सरस्वतीं भारतीं चेत्यर्थः । बहुवचनं नानाकल्पभेदेन युक्तं । छान्दसत्वाद्वा । वाचो बहुरूपत्वाद्वा । मिमाय उत्पादितवतीत्यन्वयः ।

''प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे ।
प्रजज्ञतुर्यमले तत्र पूर्वा प्रधानसंज्ञा प्रकृतिर्जनित्री ।
श्रद्धा द्वितीयाऽथ तयोश्च योगो बभूव पुंसैव स सूत्रनाम्ना'' ।।

इत्यादि महाभारततात्पर्यनिर्णये ।

